# अथ तिलक नाममण्डलचित्रम्‌



## अथ पंचाग्निकुंड चित्रम्.




आहवनीयकुण्ड१ आवसथ्यकुं२ सभ्यकुण्डम्३ गार्हपत्यकुण्ड ४ दक्षिणाग्निकुण्डमिति ५ ब्रह्मासनं- यजमानासनम्.

## अथ पात्राणामाकृतयः

आज्यस्थाली १



चरुस्थाली २



प्रणीतापात्र ३



पुरोडाशपात्र ४



२६ प्रमन्थ·



२७ नेत्रम्.



२८ अंतर्धानकट·



२९हविर्धानपात्री



३०प्राशित्रहरणं



३१ चमसा



३२ इडापात्री



३३यजमानासन



३४ पत्न्यासनं



३५ होत्रासन



| ३६ ब्रह्मासनम् | ३७ यजमानस्यपात्री |
| --- | --- |
|  |  |
| ३८ पत्नीपात्री. | ३९ कृष्णाजिनम्. |
|  |  |

# सर्वतोभद्र.



नान्दीमुखश्राद्ध विवाहके प्रथम करना चाहिये ॥ नान्दीश्राद्ध श्राद्धविवेक या अन्य ग्रंथान्तरसे देखलें

यज्ञपात्राणि कात्यायनसूत्रे–ऋचोयजूꣳषिसामा निनिगदामन्त्रास्तेषांवाक्यं निराकाङ्क्षं मिथः सं बद्धं–वैकङ्कतानिपात्राणिखादिरःस्रुवः स्फ्यश्चपाल शीजुहूराश्वत्थ्युपभृद्वारणान्यहोमसंयुक्तानि बाहुमा त्र्यःस्रुचःपाणिमात्रपुष्करास्त्वग्बालाहꣳसमुखप्रसेक मूलदण्डाभवन्त्यरत्निमात्रःस्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः स्फ्योऽस्यप्राकृतिरादर्शाकृतिः प्राशित्रहरणंचमसा कृति वा चात्वालोत्करावस्तरेणसञ्चरःप्रणीतोत्क राविष्टिषु ॥ ३ ॥ विस्तरस्तुतत्रैववासंस्कारभाष्ये द्रष्टव्यः॥ विस्तरभयान्नलिखितम् ॥ विवाहप्रकरणे येषांप्रयोजनंतेषांप्रमाणपृं० २२ आरभ्य ४० पर्यंतं पत्रोपरिलिखितंमन्यान्यादर्शमात्राणि ॥ ॥ इति श्री दैवज्ञदुनिचंद्रात्मजविष्णुदत्तसंग्रहितंगृहमण्डपपात्र चिन्हंनामप्रकरणंप्रमाणंसमाप्तम् ॥ शुभम् ॥ श्रीः ॥

( अथ विनियोगवर्णन )

व्याख्यालिख्यते ॥ विदित होकि आगामि सर्वमंत्रोंका साथ विनियोग दिखाया जावेगा इसलिये प्रथम विनियोग-कि पुष्टि कर्त्तेहैं कि विनियोग उस्को कहतेहैं कि ऋषि छंद दे-वताओंका स्वर कर्ममें योजन करना अर्थात् इस मंत्रका यह ऋषि और यह देवता अमुक छंद इन्का यथार्थ ज्ञानको

विनियोग कहतेहैं और विना विनियोगके मंत्र सिद्धिको प्राप्त नहीं होता इसकारणसे विनियोगकी आवश्यकता है ऋषि किनको कहतेहैं-( द्रष्टारे ऋषयः ) अर्थ मंत्रद्रष्टा ऋषि होतेहैं जैसे इस मंत्रका गोतम ऋषि वा भरद्वाज वा आङ्गिरस इत्यादि ऋषिहै वहां समझना कियह मंत्र इस ऋषिको अपने तपोबलसे प्रत्यक्ष स्मरण भया उस्को निश्चय गुरुसे किया था फिर वही मंत्र वेदसे सदृश मिलनेसे वह ऋषि उस मंत्रका भया कि इसने प्रथम माल्लूम किया ॥ १ ॥ और देवता उन्को कहतेहैं ( स्मर्तारः परमेष्ठ्यादयः ) अर्थात् जैसे ब्रह्माने अमुक वेदका स्मरण किया विष्णुने अमुक स्मरणकरा इसप्रकार रुद्र इंद्र अग्नि सूर्य चंद्रादि जिस २ मंत्रोंको स्मरण कर्तेभये वह उन२ के देवता भये॥२॥ अब छंद लिखतेहैं (छन्दांसि गायत्रीप्रभृतीनि) अर्थात् गायत्रीसे आदिलेकर मंत्रोंके छंद होतेहैं अब छंदोंको यथावत् लिखते हैं किजो वेदमंत्रोंके हैं ॥ उक्ता १ अत्युक्ता २ मध्या ३ प्रतिष्ठा ४ सुप्रतिष्ठा ५ गायत्री ६ उष्णिक् ७ अनुष्टुप् ८ बृहती ९ पंक्ति १०. त्रिष्टुप् ११ जगती १२ अतिजगती १३ शक्करी १४ अतिशक्वरि १५ अष्टि १६ अत्यष्टि १७ धृति १८ अतिधृति १९ प्रकृति २० आकृति २१ विकृति २२ संस्कृति २३ अभिकृति २४ उत्कृति २५ यह छंदसंख्या है ॥

## अथ गायत्र्यादिछन्दोभेदाः ॥

| | छन्दः | गायत्री | उष्णि | अनुष्टुप् | बृहती | पंक्ति | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|---|
| १ | आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| २ | दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| ३ | आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| ४ | प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| ५ | याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| ६ | साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| ७ | आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ८ | ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

इसप्रकार सम्पूर्णछन्दोंके अनेक भेद हैं विस्तारके भयसे लिखते नहीं एक गायत्री छन्द उदाहरण मात्र दिखलादियाहै जिनमहाशयोंको और भेद देखनेकी इच्छाहो वह सभाष्य पिंगलसूत्र छंद शास्त्रसे देखलेवे ॥ श्रीः। इति श्रीदेवशङ्कनिचंद्रात्मजपण्डितविष्णुदत्तकृतऋषिछंददेवतावर्णनं नाम द्वितीयं प्रकरणं समाप्तम् ॥

इति द्वितीयं प्रकरणम् ।

ओंस्वस्तिश्रीगणेशायनमः ॥ श्रीगुरवेनमः ॥ अथ कात्यायनीशान्तिप्रयोगः ॥ आदौगणपतिंवन्देविघ्न नाशंविनायकम् । ऋषींश्चदेवजननींग्रहस्थापनंमा रभे ॥ १ ॥

भा०टी०–श्रीगुरुचरणसरोजं नत्वा गणपत्यादिदेवांश्च ॥ कात्यायनकृतशान्तेः कुर्वेनृभाषयाटीकाम् १ काव्यकलापे कुशलाः सन्तियद्यपिसर्वभूदेवाः ॥ सर्वजनसुखाप्तिहेतौ क्रियतेविष्णुदत्तेन ॥ २ ॥ श्रीविघ्नविनाशक विनायक गणपतिजीको तथा ऋषियोंको देवजननी दुर्गाजी अथवा अदितिजीको वंदन कर प्रथम ग्रहोंकी यथावत स्थितिका प्रारंभ करते हैं ॥ देवजननी इस शब्दसे लक्षणद्वारा ब्रह्मा विष्णु रुद्रादि देवता और ब्रह्मविद्याका ग्रहण होताहै ॥

मण्डलंचततः कृत्वा सर्वतोभद्रमेवच । व्रतोपनयने चूडेयत्रशांतिरुदाहृतां ॥२॥ विवाहादौलिखेन्नित्यंति लकंनाममण्डलम् । द्वादशाङ्गुलमध्यस्थंवर्तुलाष्टदलंर विम्॥३॥चन्द्रमर्द्धंलिखेत्तत्र ह्याग्नेय्यां चतुर्विंशतिः ॥ त्रिकूटंभूसुतंचैवदक्षिणेचतुरंगुलम् ॥ ४ ॥ धनुपाका रंनवाङ्गुल्यमीशानेचबुधंतथा ॥ उत्तरेचगुरुःस्थाप्यः पद्माकारोनवाङ्गुलः ॥ ५ ॥ पूर्वेसंस्थापयेच्छुक्रं चतु ष्कोणंनवांगुलम्।खड्गाकृतिनवाङ्गुल्यं प्रतीच्यांशनिमे वच॥६॥नैर्ऋत्यांराहुंसंस्थाप्यमत्स्याकारंनवांगुलम्॥ केतुंदीर्घंयथाराहुंवायव्यांदिशिसंस्थितम् ॥ ७ ॥ स्व स्वदिक्षुग्रहाःस्थाप्याःसंख्या रेखाभवेद्ध्रुवम् । भा

स्करांगारकौरक्तौ श्वेतौ शुक्रनिशाकरौ ॥ ८ ॥ सोमपुत्रोगुरुश्चैवउभौतौपीतकौस्मृतौ । कृष्णवर्णौभवेत्सौरीराहुकेतूचधूम्रकौ ॥ ९ ॥ ब्रह्माविष्णुश्चरुद्रश्च उत्तरेचतथाऽनलः ॥ इंद्रोवायुर्भवेत्पूर्वेसर्प्पकालौच दक्षिणे ॥१०॥ ऐशान्यांकलशः स्थाप्य ओंकारादीश्चसर्वशः । मातरश्चोत्तरेस्थाप्याआग्नेय्यांयोगिनीं न्यसेत् । कनिष्ठिकाप्रमाणेनरेखाः कार्य्याःप्रयत्नतः ॥ ११ ॥ स्थूलाः सूक्ष्मानकर्तव्यायदीच्छेच्छ्रेयआत्मनः ॥ १२ ॥ इतिग्रहस्थापनम् ॥

भा०टी०-व्रतमें उपनयन चूडाकर्म तथा जहां शांति हो वहां सर्वतोभद्र मण्डल रचना चाहिये, विवाहमें तिलकनाम मण्डल लिखे ॥ यह मंडलका चित्र पीछे लिखा है इस लिये अर्थ सुगम होनेसे लिखते नहिं ॥ तथापि सूर्य मंगल यह रक्त वर्णसे लिखे बुध गुरु पीतवर्णसे शुक्र चंद्र श्वेत और कृष्णवर्णसे शनि राहु केतु धूम्रवर्ण लिखे व यदि कल्याण की ईच्छा हो तो ना अति सूक्ष्म और ना स्थूल लिखे ॥

इति नवग्रहस्थापनविधानम् ॥

अथ स्वस्तिवाचनम् ॥

हरिःओम् शुक्लयजुर्वेदअध्याय २५ कं०मंत्र १९

स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः। स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥१॥

यजु० अध्याय ३८ ॥ मंत्र ३६

पयः पृथिव्याम्पय ऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ २ ॥

शु० यजु० अध्याय ५ मंत्र २१ ॥

विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि । वैष्णवमसि विष्णवे त्वा ॥ ३ ॥

यजु० अध्याय १४ मंत्र २० ॥

अग्निर्देवता वातो देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवता दित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥ ४ ॥

यजु० अध्याय ३६ मंत्र १७ ॥

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शा

न्तिरापःशान्तिरोषधयःशान्तिः।वनस्प
तयःशान्तिर्विश्वेदेवाः शांतिर्ब्रह्मशा
न्तिः सर्वंशान्तिः शांन्तिरेवशान्तिः
सामाशान्तिरेधि ॥ ५ ॥

यजु० अध्याय ३० अनुवाक १ मंत्र ३

विश्वानिदेवसवितर्दुरितानिपरासुव ।
यद्भद्रन्तन्नऽआसुव ॥ ६ ॥

यजु० अध्याय १६ अनुवाक ७ मंत्र४८

इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभं
रामहेमतीः ॥ यथा शमसद्द्विपदेचतुष्प
देविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ७॥

यजुर्वेद अध्याय २ मंत्र १२

एतन्तेदेवसवितर्यज्ञम्प्राहुर्बृहस्पतयेब्र
ह्मणे। तेनयज्ञमवतेनयज्ञपतिन्तेनमामव८॥

यजुर्वेद० अध्याय २ मंत्र १२

मनोजूतिर्जुषतामाज्ज्यस्यबृहस्पतिर्य्य

ज्ञमिमंतनोत्त्वरिष्टंश्ययज्ञठंसमिमन्दधा
तु । विश्वेदेवासऽइहमादयन्तामोंश्प्र
तिष्ठ ॥ एषवैप्रतिष्ठानाम यज्ञोयत्रैतेनय
ज्ञेनयजन्तेसर्वमेव प्प्रतिष्ठितंभवति ।ॐ३म्र

यजुर्वेद अध्याय २३ ॥ मन्त्र १९ ॥

गणानान्त्वा गणपतिठं हवामहेप्प्रिया
णान्त्वाप्प्रियपतिठंहवामहे निधीनान्त्वा
निधिपतिं ठं हवामहे वसोमम। आहम
जानिगर्भधमात्वमजासिगर्भधम् ॥

शुक्लयजु अध्याय १६ मंत्र २५ ॥

नमोगणेभ्योगणपतिभ्यश्चवोनमो नमो
व्रातेभ्यो व्रातपतिभ्यश्श्चवो नमोनमो
गृत्सेभ्योगृत्सपतिभ्यश्चवो नमोनमो
विरूपेभ्योविश्वरूपेभ्यश्चवोनमः ॥

ओंसुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लंबो
दरश्च विकटो विघ्ननाशो विनायकः ॥ धूम्रकेतुर्गणा
ध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानिनामानियः

---

१ यह मंत्र ब्राह्मणकांड ॥

पठेच्छृणुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेत था । संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ॥ श्रीगण पतयेनमः ॥ इति स्वस्तिवाचनम् ॥

भा०टी०-यह स्वस्तिवाचनका अर्थ आगे विवाहप्रकरणके आदिमें लिखाहै इस लिये पिष्टपेषण नहिं करते ॥ (मनोजूति इस्का) (अर्थ.) अति वेग युक्त मेरा मन आज्यको सेवन करे इस यज्ञको बृहस्पतिजी विस्तृत करे तथा अरिष्टको तथा इस यज्ञकी पुष्टि करे । और विश्वेदेवा १३ नाम देवगण इहां आनंदसे मग्न होवे वा मदयुक्त होवै ॥ (सुमुख श्चेति) यह १२ द्वादश गणेशजीके नाम विद्याके प्रारंभ तथा विवाहमें प्रवेशनिर्गम संग्राम संकट अर्थात् जहां भीतिहो वहां लेनेसे विघ्नादि सर्व उपद्रव शान्त होतेहैं इस लिये आदिमें गणपतिपूजन यथोक्त करना चाहिये ।

ततःसंकल्पः ॥

ओंतत्सदद्यब्रह्मणोद्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे जंबूद्वीपेभरतखंडे, आर्यावर्तेवर्तमानकलियुगप्रथम चरणेवैवस्वतमन्वंतरे अष्टाविंशतिमेकलियुगेऽमुक ऋतौअमुकमासेऽमुकपक्षेऽमुकतिथौअमुकवासरान्वि तायाममुककरणनक्षत्रयोगयुक्तायां श्रुतिस्मृतिपु राणोक्तफलावाप्तिकामः धर्मार्थकाममोक्षार्थंमनोभि लषितप्राप्तयेअमुकगोत्रो ऽमुकशर्मा ऽहममुकक र्मनिमित्तककात्यायनीशान्तिंकरिष्ये ॥ तन्निर्विघ्नप रिसमाप्तयेगणपतिपूजनंचकरिष्ये इति ॥

भा० टी०–संकलपमें यथावत् संवत्सरादि नामादि उच्चारण करनें चाहिये ॥ और शर्मके स्थान क्षत्री वर्मा यह पद कहे और वैश्य गुप्त यह पद कहै ॥ प्रमाण. (शर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्य) गृह्यसूत्र । १ कांडमें ॥

अथगणपतिपूजनम् ॥ ॐगणानांत्वागणपति ठं हवामहेइतिमंत्रेण । ॐभूर्भुवःस्वः भगवन्गणपति दैवतइहागच्छइहतिष्ठ सुप्रतिष्ठ वरदोभवममपूजांगृ हाण ॥ पाद्यादिभिरर्चयेत् । भगवन्गणपतिदेवएत त्पाद्यादिभिर्गंधाक्षतादिभिश्चपूजितःप्रसन्नोभव ॥ पु नः । वक्रतुंडमहाकायकोटिसूर्यसमप्रभ । अविघ्नंकु रुमेदेवसर्वकार्येषुसर्वदा॥ इति ॥ अथपंचोपचारपूज नम्॥आवाहयाम्यहंदेवमोंकारंपरमेश्वरम्।त्रिमात्रंत्र्य क्षरंदिव्यंत्रिपदंचात्रिदैवकम् । त्र्यक्षरंत्रिगुणाकारं सर्वा क्षरमयंशुभम् । त्र्यणवंप्रणवंहंसंस्रष्टारंपरमेश्वरम् । अनादिनिधनंदेवमप्रमेयंसनातनम् ॥ परंपरतरंबीजं निर्मलंनिष्कलंशुभम् ॥

भा० टी०–गणानांत्वा इस मंत्रसे गणपतिका पूजन करे और प्रार्थना करे हे भगवन् गणपति देव इहां आओ और बैठो वरको देवो और पूजाको ग्रहण करो ॥ पाद्य अर्घ आचमनीय इत्यादिसे आगे लिखे षोडशउपचारसे पूजन करे । इस प्रकार ओंकारके मंत्रोंसे ओंकार पूजन कर्ना ।

शुक्लयजुर्वेद अध्याय २२ अनुवाक ७ मंत्र २२

ॐआब्रह्मन्ब्राह्मणो ब्रह्मवर्चसीजाय

तामाराष्ट्रेराजन्यःशूरइषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढान ड्वानाशुःसप्तिःपुरन्धिर्योषाजिष्णूरथे ष्ठाःसभेयोयुवास्ययजमानस्यवीरोजा यतान्निकामेनिकामेनःपर्ज्जन्योवर्षतुफ लवत्योनऽओषधयःपच्च्यन्तांयोगक्षे मोनःकल्पताम् ॥

भा०टी०-( मंत्रार्थ ) हेब्रह्मन् हे ब्रह्माजी आप कृपासे यज्ञको करना कराना पढना पढाना दान ले देना इत्यादि षट्कर्म करनेवाले और ब्रह्मतेजवा० ब्राह्मण होमे ॥ और हमारे राष्ट्रमें क्षत्री व्याधि कातरतासे रहित शूरवीर महारथ इस यजमानके हो और इस यजमानकी दुग्ध देनेवाली गौऊ होमे और शीघ्र गमनवाले घोडे और सुंदर रूपवाले होमे ॥ और पुरुष रथमें बैठनेवाले युवान सभा योग्य इस यजमानके संबंधि पुत्रादि होमे और हमारी प्रार्थनासे वृष्टि हो और फल युक्त औषधीयां पके हमारेको योगक्षेम होवे ॥

अथ रक्षाविधानम् ॥ शुक्लयजु अध्याय ३ मंत्र ३० ॥

ॐमानःशर्ठसोअररुषोधूर्तिःप्रणङ्क्त्यं स्य । रक्षाणोब्रह्मणस्पते ॥

यजु० अध्याय ३४ मंत्र ५२ ॥

ॐयदाबध्नन्दाक्षायणाहिरण्यꣳशतानी कायसुमनस्यमानाः॥तन्मआबध्नामि शतशारदायाऽऽयुष्माञ्जरदष्टिर्यथा सम् ॥ इतिपठन् ॥

भा०टी०-( मानः श० सः ) हे ब्रह्मण्यते हमारे अनिष्ट चिन्तक परंतु मारणेमें असमर्थ हमारे शत्रुकी धूर्ति नाम हिंसा आप मत करे किंतु हमारी रक्षाकरे अर्थात् असमर्थ शत्रुका क्या मारना वह आगे मृत होताहै ( यदाबध्नन् ) दक्षकी संतान जो सुवर्ण शतानीक अर्थात् बहुत सेनायुक्त राजाको बंधते भये प्रसन्न चित्त होकर शतजीवनके लिये तिस प्रकार जैसे हम वृद्धावस्थाको प्राप्त होमें तद्वत् बांधते हैं ॥

## अथ मातृपूजनम् ॥

गौरी१पद्मा२शची३मेधा४ सावित्री ५ विजया ६ जया७॥देवसेना८स्वधा ९स्वाहा १० मातरो ११ लोकमातरः१२॥हृष्टिः१३पुष्टि१४स्तथातुष्टि १५ स्तथात्मकुलदेवता ॥ १६ ॥ श्रीकुलदेव्यंतर्गतगौर्यादिषोडशमातृभ्योनमः॥अथऋत्विजांवरणम्॥ यथाचतुर्मुखोब्रह्मासर्ववेदधरःप्रभुः ॥ तथात्वंमम यज्ञेऽस्मिन्ब्रह्माभवद्विजोत्तम ॥ गृहीत्वातु कराङ्गुष्ठं

यजमानःपठेदिदम् ॥ अस्यकर्म्मणःप्रतिष्ठापनार्थं त्वंब्रह्मा भव ( अहंभवामि ब्रह्मा ब्रूयात् )

भा०टी०-गौरीसे आदि षोडश१६ मात्रा भिन्नभिन्न अंक देकर लिखीहैं.मूलमें.॥ उन्की यथावत् षोडशोपचार पूजा करनेसे वह संतुष्ट होकर शुभको विधान कर्ता हैं ॥ ऋत्विक् होता आचार्य ब्रह्मादि वरणमें प्रथम ब्रह्माका वरण होताहै अर्थ जैसे चतुर्मुख संपूर्ण वेदविद्याके जाननेवाले ब्रह्माजी है तद्वत् आप मेरे यज्ञमें होमे यह कहे हस्तका अंगुष्ट पकड कर यजमान इस कर्मकी प्रतिष्ठाके लिये आप ब्रह्मा हो। होताहै यह ब्रह्मा कहै ॥

आचार्य्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः । तथा त्वंममयज्ञेऽस्मिन्नाचार्योभवसुव्रत ॥ गृहीत्वातुक रांगुष्टंयजमानःपठेदिदम् ॥ अस्यकर्म्मणःप्रतिष्ठा पनार्थंत्वमाचार्योभव । अहंभवामि ॥ ऋग्वेदःपद्मप त्राक्षोगायत्र्यः सोमदैवतः । अत्रिगोत्रस्तुविप्रेन्द्रऋ त्विक्त्वंमेमखेभव ॥ गृहीत्वातुकरांगुष्टंयजमानःप ठेदिदम् ॥ अस्यकर्मणःप्रतिष्ठापनार्थमृग्वेदीभव । अहंभवामि ॥

भा०टी०- जैसे स्वर्गमें इंद्रादिकोंका आचार्य्य (गुरु) बृहस्पतिजी है तद्वत् आप मेरे यज्ञमें आचार्य्य होवें गृहीत्वा तु इसका पूर्वोक्त अर्थ है यदि कोई कहै कि आचार्य्यको गुरु कैसे कहते हैं उत्तर जो उपनयन कर शौचता और वेद विद्या पढावे वह आचार्य अर्थात् गुरुको कहतेहैं प्रमाण भी यास्कजीने निरुक्तमें लिखाहै (आचार्य्यःकस्मा

दाचार्यआदाचारंग्राहयित्वा चिनोत्यर्थात्) याज्ञवल्क्य जी भी लिखते हैं"उपनीयददद्वेदमाचार्य्यःसउदाहृतः"इस प्रकार ऋग्वेदादिक चार वेदोंका वरण जानना ॥ स्वरूप ऋग्वेदका पद्मपत्रवत् नेत्र गायत्री छंद सोम देवता अत्रि गोत्र इत्यादि ॥

कातराक्षोयजुर्वेदस्त्रिष्टुभोत्रह्मदैवतः। भारद्वाजस्तुविप्रेंद्रऋत्विक्त्वंममखेभव ॥ गृहीत्वातुकरांगुष्टंयजमानःपठेदिदम् ॥ अस्यकर्मणःप्रतिष्टापनार्थंत्वंमेयजुर्वेदीभव(अहंभवामि)सामवेदस्तुपिंगाक्षस्त्रिष्टुभोविष्णुदैवतः । काश्यपेयस्तुविप्रेंद्रऋत्विक्त्वंममखेभव ॥ गृहीत्वातुकरांगुष्टंयजमानःपठेदिदम् ॥ अस्यकर्मणःप्रतिष्टापनार्थंत्वं सामवेदीभव (अहंभवामि)

भा०टी०–कैरता युक्त नेत्र त्रिष्टुप्छंद ब्रह्मदेवता भारद्वाज गोत्र इत्यादि यजुर्वेदका स्वरूपहै और पिंगलवर्ण नेत्र त्रिष्टुप् छंद विष्णुदेवता काश्यपगोत्र इत्यादि सामवेदका स्वरूप छंदादिक है ॥

## अथाशीर्वादः ॥

ऋग्वेदस्तुयजुर्वेदः सामवेदोह्यथर्वणः । ब्रह्मवाक्यैश्वतैर्नित्यं हन्यंतांतवशत्रवः ॥ अपुत्राःपुत्रिणःसन्तुपुत्रिणः सन्तु पौत्रिणः। अधनाःसधनाः सन्तु संतुसर्वार्थसाधकाः ॥ विप्रहस्ताच्चगृह्णीयाद्यज्ञपुष्पफलाक्षतान् । चत्वारस्तववर्द्धन्तामायुःकीर्तिर्यशोबलम् ॥ अथ कलशपूजनम् । ॐ ऋग्वेदायनमः यजुर्वेदायनमः सा

मवेदायनमः अथर्ववेदायनमः कलशायनमः वरुणा यनमः रुद्रायनमः समुद्रायनमः गंगायैनमः यमुना यैनमः सरस्वत्यैनमः कलशकुंभायनमः ॥

भा०टी०-ऋक् यजु साम अथर्वण यह ४ वेद ब्रह्मवाक्य पुराणादि सहित तुमारे शत्रुओंको नष्टकरे ॥ और जिन्के पुत्र नहीं वह पुत्रयुक्त हों और पुत्रोंवाले पौत्रोंसे युक्त हों ॥ निर्धन धनवान् हों धनवान् संपूर्ण कामना सिद्धकरनेवाले हो॥ यज्ञमें ब्राह्मणके हाथसे पुष्प फल अक्षत ग्रहण करे ४ चार वस्तु आयु १ कीर्ति २ यश ३ बल ४ वृद्धिको प्राप्त हो ॥

ब्रह्मणानिर्मितस्त्वंहिमंत्रैरेवामृतोद्भवः ॥
प्रार्थयामिचत्वांकुंभवांछितार्थंतुदेहिमे ॥

शुक्लयजु०अध्याय ४ मंत्र० ३६

वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्ज्जनीस्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥

भा०टी०-(वरुणस्योत्तंभनमसि) अर्थ-हे शम्प तुम वरुणके जलकी स्तंभन करनेवाली है और वरुणकी तुम शिथिल शम्पा २ होवे और वरुणके सत्य स्थानमें हो और वरुणके सत्य स्थान होनेसे आप इहाँ स्थित होवें ॥ यह वेदमंत्रार्थ है ॥ १ ॥ ब्रह्माजीने अमृतोद्भव मंत्रोंसे आपको रचा और हम आपकी ---ना करतेहैं की हमारेको वांछित अर्थ देवे ॥

## अथ वास्तुपूजा ॥

अथातः संप्रवक्ष्यामि यदुक्तं वास्तुपूजनं॥येनपूजा विधानेन कर्मसिद्धिस्तुजायते॥अनंतंपुण्डरीकाक्षं फणाशतविभूषितम्। विद्युद्वन्धूकसाकारं कूर्मारूढं प्रपूजयेत् ॥

शुक्लयजु अध्याय १३ मंत्र ६

ॐनमोस्तु सर्प्पेभ्यो येकेच पृथिवीमनु । येऽअन्तरिक्षे येदिवितेभ्यः सर्प्पेभ्योन मः॥वासुक्याद्यष्टकुलनागेभ्योनमः ॥

भा०टी०-इसके अनंतर वास्तुपूजा लिखतेहैं जिस्के करनेसे कर्मोकी सिद्धि होतीहै॥ यह कर्मका अंग है कमलसदृश नेत्रवाला और शतफणोंसे सुशोभित विद्युतकांतियुक्त कूर्मदेवपर स्थित अनंत ( शेष ) की पूजन करे ॥ [ नमोस्तु मंत्रार्थ ] जो पृथ्वीमें रहतेहैं और जो आकाशमें तथा स्वर्गमें सर्प रहतेहैं तिन्हों संपूर्णोके लिये यह प्रणाम वारंवार हो और वह रक्षा करे यहफलितार्थ है ॥

### अथ योगिनीपूजा

ॐआवाहयाम्यहं देवींयोगिनीं परमेश्वरीं। योगाभ्यासेन संतुष्टापरध्यानसमन्विता ॥ १ ॥ दिव्यकुण्डलसंकाशा दिव्यज्वाला त्रिलोचना । मूर्तिमती ह्यमूर्ता च उग्रा चैवोग्ररूपिणी ॥ २ ॥ अनेकभावसं

युक्ता संसारार्णवतारिणी। यज्ञं कुर्वन्तु निर्विघ्नं श्रेयो यच्छन्तु मातरः ॥ ३ ॥ दिव्ययोगी महायोगी सिद्धयोगी गणेश्वरी । प्रेताशी डाकिनी काली कालरात्री निशाचरी । हुंकारी सिद्धवेताली खर्परी भूतगामिनी । ऊर्ध्वकेशी विरूपाक्षी शुष्कांगी मांसभोजनी । फूत्कारी वीरभद्राक्षी धूम्राक्षी कलहप्रिया । रक्ता च घोरा रक्ताक्षी विरूपाक्षी भयंकरी । चौरिका मारिका चंडी वाराही मुण्डधारिणी । भैरवी चक्रिणी क्रोधा दुर्मुखी प्रेतवासिनी । कालाक्षी मोहिनी चक्री कंकाली भुवनेश्वरी। कुण्डलातालकौमारी यमदूती करालिनी।कौशिकी यक्षिणी यक्षी कौमारी यंत्रवाहिनी॥ दुर्घटे विकटे घोरे कपाले विपलंवने।चतुःषष्टिःसमाख्यातायोगिन्योहि वरप्रदाः त्रैलोक्ये पूजिता नित्यं देवमानुषयोगिभिरिति ॥

भा०टी०-परब्रह्ममें खचित योगाभ्यासकर संतुष्ट परमेश्वरी देवी श्रीयोगिनीका आवाहन कर्ते हैं॥१॥ दिव्य कुंडलोंसे युक्त तेजयुक्त त्रिनेत्र मूर्तिवाली और मूर्तीसे रहित भयानक इत्यादि अनेक भावोंसे संयुक्त संसाररूपी समुद्रके पार उतारनेवाली योगिनी माता इस यज्ञको विघ्नरहित करे और हमारेको कल्याण देवे ॥ यह ६४ योगिनी संकटमें विपत्तीमें अर्थात् जहां भीतिहो वहां स्मरण की हुई वेरको देती संकट दूरकर्तीहैं इस कारणसे देव मानुष योगिजनोंकर यह पूजनीय है अर्थात् संपूर्ण जगत् इन्की पूजा

अथ ब्रह्मपूजा

शुक्लयजु० अध्याय १३ मंत्र ३ ॥

ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥ इति पाद्यादिभिर्ब्रह्माणमर्चयेत् ॥

अथ विष्णुपूजा

यजु० अध्याय ५ मंत्र २१ ॥

ॐविष्णोरराटमसिविष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसिविष्णोर्ध्रुवोसि । वैष्णवमसि विष्णवेत्वा ॥

भा०टी०-( मंत्रार्थ ब्र० ) ब्रह्म सर्वव्यापि सूर्य प्रथम पूर्व-दिशामें उदय होताहै फिर अपने प्रकाशसे चारोंतरफ म-ध्यवर्ती प्रकाश करताहै वह प्रकाशमान लोक वेनमेधावी आदित्य दिशाओंसे जानाजाताहै इस जगतविद्यमानका अधिष्ठाताहै और अमूर्त अदृश्यमान जगत्का कारणहै ॥ अर्थात् सूर्य भगवानही संपूर्ण लोकोंको दिशाको प्रकाश कर्ताहै ॥ विष्णोरराटमसि, इसका अर्थ आगे लिखाहै शां-तिपाठमें ॥ ॥ इति विष्णुं पाद्यादिभिरर्चयेत् ॥

अथ शिवपूजा

शुक्ल यजुर्वेद अध्या० १६ मंत्र ४१ ॥

ॐ नमः॑शम्भ॒वाय॑ च मयो॒भ॒वाय॑ च॒ नमः॑शङ्क॒राय॑ च मयस्क॒राय॑ च॒ नमः॑शि॒वाय॑ च शि॒वत॑राय च ॥

भा०टी०-(नमःशंभवायेति) नमस्कारहै शंमके देनेवाले तथा सुख कल्याणादिगुण देनेवाले शंकरजीको ॥

इति शिवं पाद्यादिभिरर्चयेत् ॥

॥ अथेंद्रपूजा ॥ यजु० अध्याय २० मंत्र ५० ॥

ॐ त्रा॒तार॒मिन्द्र॑मवि॒तार॒मिन्द्र॒ᳬ हवे॑हवे सु॒हव॒ᳬ शूर॒मिन्द्र॑म् । ह्वया॑मि श॒क्रम्पु॑रुहू॒तमिन्द्र॑ᳬ स्व॒स्तिनो॑ म॒घवा॑ धा॒त्विन्द्रः॑ ॥

ॐइंद्रायनमः इति पूजयेत् ॥

भा०टी०-(त्रातारमिंद्र ) रक्षाकरनेवाला जिससे इंद्रजीको कहतेहैं बुलावनेमें शोभन शूरवीर वह इंद्र हमारे कर बुलायाभया ना नष्ट होनेवाला धन और स्वास्ति हमारेको देवे हम प्रार्थना करतेहैं ॥

अथ वायुपूजा ॥ यजु० अ० २७ मंत्र ३२॥

वायो॒ये ते॑ सहस्रि॒णो॒ रथा॑स॒स्तेभि॒रा ग॑हि ॥

नि॒युत्वा॒न्त्सोम॑पीतये ॥

यजु० अ०९ मंत्र ७ ।

ॐ वातो वामनोवा गन्धर्वाः सप्तविंशति ॥ तेअग्रे श्वमयुञ्जँस्तेऽस्मिन् जवमादधुः ॥ ॐ वायवेनमः ॥ इतिपूजयेत्

भा०टी०(हेवायुदेव) जो तुमारे सहस्त्रसंख्यक रथसदृश रथ है उन्से युक्तहोकर आप सोमपानके लिये आओ हमप्रार्थना करतेहैं ॥

अथ धर्मपूजा यजु० अध्याय ३ मंत्र १८॥

ॐ अग्ने सपत्न दम्भनमदब्धासोअदाभ्यम् । चित्रावसो स्वस्तितेपारमशीय ॥ धर्मायनमः ॥ इतिपूजयेत् ॥

भा०टी०-(अग्नेसपत्न) हेभगवन् अग्निदेव तुम शत्रुओंको नाशक रनेवाले हमारेको ना हिंसनकरते हमारी वृद्धिकरे हेचि त्रावसो हेरात्रि ! नाशहोनेवाली कल्याणदेवे. ( रात्रिर्वैचित्रावसुरिति श्रुतिः ) और तुमारे पारको सुखपूर्वक प्राप्त होयाकरें ॥

अथ यमपूजा ॥ शु०यजु० अध्याय २९ मं०॥१४॥

ॐ असियमो अस्यादित्यो अर्वन्नासित्रितोगुह्येन व्रतेन । असिसोमेन समया

विप्रॄक्त आहुस्तेत्रीणिदिवि बंधनानि ॥इ
ति यमपूजा दक्षिणेकार्या ॥

अथ नवग्रहपूजा ॥

शु०यजु० अध्याय ३४ मं०३१ ॥

ॐ आकृष्णेन रजसावर्तमानोनिवेशयं
न्नमृतम्मर्त्यंञ्च ॥ हिरण्ययेंनसवितारथे
नादेवोयातिभुवनानिपश्यन् ॥ ॐसूर्या
यनमः ॥ इतिसूर्यं पूजयेत् ॥

भा०टी०–आकृष्णेनेति ॥ सूर्यदेव रात्रिरूप रजसे वर्तमान वारंवार भ्रमण कर्ता तथा अपने२स्थानमें देवताओंको अमृत मनुष्यादिकोंको अन्न देताहुआ सुवर्णके रथसे १४ भुवनोंको देखता भया और आरोग्य देता भया फिरताहै उदय होताहै ॥१॥

शुक्लयजु०अध्याय १० मंत्र १८ ॥

इमंदेवाऽअसपत्नꣳसुवध्वम्महतेक्षत्राय
महतेज्येष्ठ्यायमहतेजानराज्यायेन्द्र
स्येन्द्रियाय॥इममुष्यपुत्रममुष्यैपुत्र
मस्यैविशऽएषवोमीराजासोमोस्माकम्ब्रा
ह्मणानाꣳराजा ॥ ॐसोमायनमःइतिपू० ॥

भा०टी०-इमंदेवा-देवो दानादिति-हे दानशील पुरुषो तुम इस चंद्रमाको शूरवीरताके लिये ज्येष्ठता राज्य ऐश्वर्यादिके लिये अमुक पुत्र इसकी सेवा करो यह चंद्रमा हम ब्राह्मणोंका राजा है॥ श्रौतार्थमें हे देवताओ यह संबंध करना ॥

शुक्लयजु० अध्याय ३ मंत्र १२

अग्निर्म्मूर्द्धादिवःककुत्पतिः पृथिव्याऽअयम् ॥ अपाᳬरेताᳬसिजिन्वति ॥ ॐ अंगारकाय०इतिपू० ॥

भा०टी०-अग्निर्मूर्द्धा-हे अग्निस्वरूप वा अग्नितत्व मंगल देव स्वर्ग आकाशमें सूर्यरूप होकर मूर्द्धवर्तिहो और ककुत् बडे तेजस्वी और पृथिवीके पुत्र हो और तुमही जलवृष्टि रेतोत्पत्तिमें कारण हे ॥ ( श्रौतार्थमें अग्निस्तुतिमें विनियुक्त है )

प्रमाण बृहज्जातके शिखिभूखपयोमरुद्गणानां वशिनो भूमिसुतादयः क्रमेण ॥

यजु० अध्याय १५ मंत्र ३॥

उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसᳬसृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥४॥ ॐबुधायनमः इ० पू०

भा०टी०-उद्बुध्यस्व-हे बुधदेव अग्निवत् प्रकाशमान आप प्रसन्न हो आपकी प्रसन्नतासे यह यजमान इष्टमनोरथ

को प्राप्त होवे और इस लोकमें ऐश्वर्यादि भोग उत्तर लोक में देवताओंके साथ निवास करे यह हम प्रार्थना करते हैं (श्रौतमें अग्नि)

यजु० अध्याय २६ मंत्र ३॥

बृहस्पतेऽअतियदर्य्यो ऽ अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥ ॐबृहस्पतयेनमः इ० ॥

भा०टी०-बृहस्पते-हे बृहस्पति देव अतिशयसे धन अर्थ स्वामिता अर्ह पूजा यज्ञकरनेवाले पुरुषमें धारण करे और बलसे जो रक्षाकरनेवाले तथा सत्यसे हैं उत्पत्ति जिनकी वा सत्य प्रजावाले पुरुषोंको अनेक प्रकार चित्र विचित्र धन देनेमें यह प्रार्थना करते हैं॥

यजु० अध्याय १९ मंत्र ७५॥

ॐअन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिवत्क्षत्रम्पयः सोमम्प्रजापतिः ऋतेनसत्यमिन्द्रियव्विपानꣳ शुक्रमन्धसइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ६ ॥ ॐशुक्रायनमःइति० ॥

भा०टी०-अन्नात्परिस्रुतः-हविलक्षणरूप अन्नका परिस्रुत रसमयी लक्षण ब्रह्मसे व्याप्त और क्षत्रसे व्याप्त सोम प्रजापति संबंधि पय इस सत्यसे युक्त इंद्रकी इंद्रिय अन्न यह शुक्रजीके संबंधसे युक्त हो यह प्रार्थना करते हैं ॥

यजु० अध्याय ३६ मंत्र १२

शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये । शंय्योरभिस्रवन्तुनः ॥ ॐशनैश्चरायनमः ॥ इतिपू० ॥

भा०टी०-शन्नोदेवी-सुखरूप हमारे कल्याणकारक देवस्वरूप रोगके विनाशके लिये भयके दूर करनेके वास्ते शनिदेवको स्तुति और प्रार्थना करते हैं ॥ श्रौतमें वरुण संबंधि स्तुत्यमंत्रहै ॥

यजु० अध्याय २७ मं ३९ ॥

कयानश्चित्र ऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ॐराहवेनमः ॥ इतिपू० ॥

भा०टी०-कयानश्चित्र-हे राहुदेव किस आगमनसे तुम हमारेको आनंद करते हैं और किससे हमारेको धन देते हैं वह हम उपाय करे ( पूजा इति शेषः ) ( श्रौतमें इंद्र )

---

१ यह मंत्र उत्तमभाष्यमें छोड़कर अर्थ लिखाहै विशेष अर्थ भाष्यकारसे आगे लिखा देखलेवे ॥

यजु० अध्याय १९ मंत्र ३ ॥

केतुङ्कृण्वन्नंकेतवेपेशोमर्य्याऽअपेशसे।स मुषद्भिरजायथाः ॥ ॐकेतवेनमः॥ इतिपू०

ॐब्रह्मा मुरारिस्त्रिपुरांतकारी भानुः शशीभूमिसुतो बुधश्च॥गुरुश्चशुक्रः शनिराहुकेतवःसर्वेग्रहाः शांतिकराभवन्तु॥इतिनवग्रहपूजा ॥ त्र्यंबकं यजामहे इति त्र्यंबकपूजनम् ॥ अथकुशकण्डिकाप्रारम्भः॥ ततोहोमार्थं चतुरंगुलोच्छ्रितहस्तमात्रपरिमितां वेदिं कुर्यात् कुशैः परिसमूह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य खादिरेण स्रुवेण चोल्लेखनंहस्तेनोद्धरणं जलेनाभ्युक्षणं कांस्यपात्रयुगलेन लौकिकंनिर्मथितं वाग्निमानीय स्थापयेत्।ततः पुष्पचंदनतांबूलवासांस्यादाय ॐअद्यकर्तव्यामुकशान्तिहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वामहंवृणे इति ब्रह्माणंवृणुयात् ॥ ॐवृतोस्मीति प्रतिवचनम् । यथाविहितंकर्मकुर्वित्याचार्येणोक्ते करवाणीतिप्रतिवचनम् । ततोग्नेर्दक्षिणतः शुद्धमासनंदत्वा तदुपरि प्रागग्रान्कुशानादायास्तीर्य्य अग्निं प्रदक्षिणं कारयित्वा

ऽस्मिन्कर्मणि त्वंमेब्रह्माभवेत्यभिधाय भवानीति तेनोक्तेतदुपरि ब्रह्माणमुदङ्मुखमुपवेश्य प्रणीता पात्रं पुरतः कृत्वा वारिणा परिपूर्य्य कुशैराच्छा द्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरिनिद ध्यात् ततः परिस्तरणं बर्हिपश्चतुर्थभागमादाया ग्नेरीशानांतंब्रह्मणोऽग्निपर्यन्तं नैर्ऋत्याद्वायव्यन्तम ग्नितःप्रणीतापर्यन्तंततोग्नेरुत्तरतःपश्चिमदिशिपवित्र च्छेदनार्थंकुशत्रयंपवित्रकरणार्थंसाग्रमनन्तर्गर्भकुश पत्रद्वयंप्रोक्षणीपात्रमाज्यस्थालींसंमार्जनार्थंकुशत्रय मुपयमनार्थंवेणीरूपकुशत्रयं समिधस्तिस्रः स्रु वः आज्यं षट्पंचाशदुत्तराचार्य्यमुष्टिशतद्वयाव च्छिन्नामतण्डुलपूर्णपात्रं ततः पवित्रच्छेदनकुशैः पवित्रेछित्त्वासपवित्रकरेणप्रणीतोदकंत्रिः प्रोक्षणीपा त्रेनिधायअनामिकांगुष्ठाभ्यांपवित्रेउत्तराग्रेगृहीत्वात्रि रुत्पवनं प्रोक्षणीपात्रंवामकरेणादाय । अनामिकां गुष्ठाभ्यांगृहीतपवित्राभ्यांतज्जलंकिंचित्त्रिरुत्क्षिप्यप्र णीतोदकनप्रोक्षणीमभिषिच्य प्रोक्षणीजलेनासादि तवस्तुसेचनंकृत्वाग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिद ध्यात् आज्यस्थाल्यामाज्यंनिरूप्याधिश्रयणं त तः कुशंप्रज्वाल्याज्योपरिप्रदक्षिणंभ्रामयित्वावह्नौत त्प्रक्षिप्यस्रुवंत्रिःप्रताप्यसम्मार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवंसंमृज्यप्रणीतोदकेनाभ्युक्ष्यपुनस्त्रिः

प्रताप्यदक्षिणतोनिदध्यांत्आज्यस्याग्नेरवतारणंतत आज्यंप्रोक्षणीवदुत्पूयावेक्ष्य सत्यपद्रव्येतन्निरसनंकृ त्वापुनःप्रोक्षणीमुत्पूय ततउत्थायो पयमनकुशान्वा महस्तेकृत्वाप्रजापतिंमनसाध्यात्वातूष्णीमग्नौ घृता क्ताःसमिधस्तिस्रःक्षिपेत् ॥ उपविश्यसपवित्रप्रो क्षण्युदकेनप्रदक्षिणक्रमेणाग्निंपर्युक्ष्यप्रणीतापात्रेपवि त्रेनिधायपातितदक्षिणजानुःकुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौस्रुवेणाज्याहुतीर्जुहोति ।.तत्तदाहुत्य नंतरंस्रुवावस्थितघृतशेषस्यप्रोक्षणीपात्रेप्रवेशः । अथस्रुवपूजनम् ॥ ॐआवाहयाम्यहंदेवंस्रुवंशेवधिमु त्तमम्। स्वाहाकारस्वधाकारवषट्कारसमन्वितम् ॥ अष्टांगुलंत्यजेन्मूलमग्रेत्यक्त्वादशांगुलं। कर्तव्यंगो पदाकारंदंडस्याग्रेतुकंकणम् ॥ विष्णोःस्थानंप्रगृह्णी याद्धूयतेचहुताशनम् ॥ पद्मयोनिंसमादायहोता सुखमवाप्नुयात् ॥ इतिस्रुवपूजनम् ॥

भा०टी०–कुशकंडिका आगे विवाहमें स्पष्टार्थ लिखी है इसलिये महाशयोंको उचित है की विवाहप्रकरणमें देखे ॥ और स्रुवको हस्तमें कंकण बंधकर पूजन कर्ना ॥

अथघृताहुतिः॥ॐप्रजापतयेस्वाहाइदंप्रजापतये इति मनसा ॥ ॐइन्द्रायस्वाहाइदमिन्द्राय० ॥ इत्याघारौ ॐअग्नयेस्वाहाइदमग्नये० ॥ ॐसोमायस्वाहा इदंसो

पा॰गृह्यसूत्रे ।

ॐयेतेशतंवरुणयेसहस्त्रंयज्ञियाःपाशावि ततामहान्तः । तेभिर्न्नोअद्यसवितोतवि ष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःस्वाहा । इद वरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योम रुद्भ्यःस्वर्केभ्यः॰ ॥

यजु॰ अध्याय २१ मंत्र १२ ॥

ॐउदुत्तमंवरुणपाशमस्मदवाधमंविम ध्यमश्रथाय । अथावयमादित्यव्रते तवानागसोऽअदितये स्यामस्वाहा ।

इदंवरुणाय॰ । एताः सर्वप्रायश्चित्तसंज्ञकाः॥ॐगण पतयेस्वाहा । इदंगणपतये॰ । ॐविष्णवेस्वाहा इदं विष्णवे॰ । ॐशम्भवेस्वाहा इदंशम्भवे॰।ॐलक्ष्म्यै स्वाहा इदंलक्ष्म्यै॰ ॥ ॐसरस्वत्यैस्वाहा इदंसरस्व त्यै॰ । ॐभूम्यैस्वाहा इदंभूम्यै॰ ॥ ॐसूर्यायस्वा॰ इदंसूर्याय॰ ॥ॐचंद्रमसेस्वाहा इदंचंद्रमसे॰ ॥ ॐ भौमायस्वाहा इदंभौ॰ ॥ ॐबुधायस्वाहा इदंबु धाय॰ ॥ ॐबृहस्पतयेस्वाहा इदंबृहस्पतये॰ ॥ ॐशुक्रायस्वाहा इदंशुक्राय॰॥ॐशनैश्चरायस्वाहा

इदंशनैश्चराय० ॥ ॐराहवेस्वाहा इदंराहवे० ॥ ॐकेतवेस्वाहा इदंकेतवे० ॥ ॐव्युष्टचैस्वाहा० इदंव्युष्टचै० ॥ ॐउग्राय स्वाहा इदमुग्राय० ॥ ॐ शतक्रतवेस्वाहा इदंशतक्रतवे० ॥ॐप्रजापतयेस्वाहा इदंप्रजापतये०॥इतिमनसा प्राजापत्यं । ॐ अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते० । इतिस्विष्टकृद्धोमः । ततःसंस्रवप्राशनमाचमनं ततोब्रह्मणे दक्षिणादानम् ॥

भा०टी०–त्वन्नोअग्ने १ सत्वन्नो अग्ने २ येतेशतं ३ अयाश्चाग्ने ४ उदुत्तमं ५ यहपांच मंत्रोंका विवाहकी कुशकंडिकाके अन्तमें अर्थ लिखाहै इसलिये पुनःपिष्टपेषण नहिंकरते॥ और आगेके नामोक्तमंत्र २१ हैं इन्में सूर्यादि नवहैं ॥ और प्रजापतये स्वाहा यह मंत्र मनमें उच्चारण करना और सर्व स्पष्ट मुखसे उच्चारण करने ॥

ॐअद्यएतस्मिञ्छांतिहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्रजापतिदैवतंअमुकगोत्रायामुकशर्मणेब्रह्मणेदक्षिणांदातुमहमुत्सृजे ॥ ॐस्वस्तीतिप्रतिवचनम् । ततोब्रह्मग्रंथिविमोकः ॥

यजु० अध्याय मंत्र

ततः ॐसुमित्रियानऽआपऽओषधयःसंतु इतिपवित्राभ्यांजलमानीयतेनशिरः संमृज्यॐदुर्म्मित्रियास्तस्मै

सन्तुयोऽस्मान्द्वेष्टियञ्चवयंद्विष्मः ॥ इत्यैशान्यां प्रणीतान्युब्जीकरणम् ।

भा०टी०–आज इस शांतिके होमरूप कर्ममें करना वा ना करना इसकी परीक्षारूप ब्रह्माके कर्मकी प्रतिष्ठालिये यह पूर्ण पात्र प्रजापतिसंबंधि अमुक गोत्रब्राह्मणको दक्षिणा देनेलिये देताहुं ॥ स्वस्ति ब्राह्मण कहे ॥ कुशनिर्मित ब्रह्माकी ग्रंथी खोलदेणी विवाहप्रकरणमें ब्रह्मादिकोंका लक्षण लिखाहै ( पंचाशताभवेद्ब्रह्मा ) इत्यादि । और सुमित्रिया १ दुर्मित्रिया २ इनदोनों मंत्रोंका अर्थभी स्पष्ट विवाहप्रकरणमें लिखा है ॥

ततःस्तरणक्रमेणवर्हिरुत्थाप्यघृतेनाभिघार्यहस्तेनै वजुहुयात् ।

यजु० अ० ८ मं० २१ ॥

ॐ देवागातुविदोगातुम्वित्वागातुमित मनसस्पत इमंदेवयज्ञᳪस्वाहावातेधाःस्वाहा

इतिवर्हिहोमः । ततःआचाराद्दशादिक्पालेभ्योदधिमाषबलिर्देयः क्षेत्रपालबलिदानंच ॥ ततःस्थालीपाकादिपक्वान्नेनगणपतिप्रमुखसूर्यादिग्रहेभ्यस्तत्तन्मंत्रैर्बलिर्देयः । ततोब्राह्मणभोजनम् ।

भा०टी०–स्मरणक्रमसे कुशाग्रहणकर घृतलगाय हाथसे हवन करे। देवागातु इसमंत्रसे इसका अर्थ विवाहप्रकरणमें लिखाहै ॥ फिर आचारसे दशादिक्पालोंको दधियुक्त माषों-

कीं बलीदेनी दश दिक्पालयहहै। इंद्र १ वह्नि २ धर्मराज३ नैर्ऋत ४ वरुण ५ मरुत ६ कुबेर ७ ईश ८ और पृथ्वी आकाशका स्वामी २। यह १०. अनंतर स्थालीपाकसे पकाहुआ पक्वान्नसे श्रीगणेशजीसे आदि सूर्यादि नवग्रह ओंकार सर्प योगिनी अर्थात् जो २ पीछे स्थापन करेहैं उनके मंत्रोंसे सबको बलिदान करना॥

ॐअद्यकरिष्यमाणभोजनसांगतासिद्ध्यर्थमिदंदक्षिणाद्रव्यंतेभ्योविभज्यदातुमहमुत्सृजे ततोगुरवेदक्षिणादेया॥ ततः छायापात्रदानं। तदनंतरंपूर्णाहुतिः तद्यथा स्रुवेणपूगीफलादिकंगृहीत्वा॥

यजु० अध्याय ७ मंत्र २४

ॐमूर्द्धानंदिवोऽअरतिम्पृथिव्यावैश्वानरमृतआजातमग्निम्। कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाःस्वाहा॥ ततः स्रुवेण भस्मानीयदक्षिणानामिकागृहीतभस्मनाॐत्र्यायुषंजमदग्नेः। इति ललाटे। ॐकश्यपस्यत्र्यायुषम्। इति॥ ग्रीवायाम्।ॐयद्देवेषुत्र्यायुषम्। इति दक्षिणबाहुमूले ॐतन्नो अस्तुत्र्यायुषम्। इति हृदि॥

भा०टी०-प्रथम संकल्प ब्राह्मणोंकी दक्षिणाका है। पीछे छायापात्र दान करना अनंतर फलपुष्प स्रुवमें स्थित घृतसे मूर्द्धानं इस मंत्रसे पूर्णाहुति करनी। यह मंत्रका अर्थ विवाह प्रकरणमें लिखाहै ॥

यजमानपक्षेतन्नोइत्यस्यस्थाने तत्तेइतिविशेषः । ततोऽभिषेकः ॥ तच्चाम्रपल्लवकुशादिकेनकलशस्थजलमानीयआपोहिष्ठेत्यादिमंत्रेणयजमानमभिषिंचेत् ॥ आचार्यादीनां दक्षिणादेया ततोभूयसींदद्यात् । ॐआज्येन वर्द्धतेबुद्धिराज्येनवर्द्धतेयशः ॥ आज्येनवर्द्धते आयुर्दर्शनंपापनाशनं । अथ विशेषपूजा । ग्रहागावोनरेंद्राश्चब्राह्मणाश्चविशेषतः । पूजिताः प्रतिपूज्यंतेसावधानाभवन्तुते । अथ अग्निविसर्जनम् । गच्छगच्छसुरश्रेष्ठस्वस्थानं परमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥

भा०टी०-घृतसे बुद्धि बल यश आयु वृद्धिको प्राप्तहोती और पाप नष्ट होते हैं ॥ आयुवृद्धिमें प्रमाण भावप्रकाश. चिकित्सा शास्त्रमें जैसे ( स्वमाननं घृते पश्येद्यदीच्छेच्चिर जीवितुं ) ग्रह गौआ ब्राह्मण राजा यह पूजन किए हुये विशेष फल देते हैं ॥ गच्छ २ इस मंत्रसे अग्निका विसर्जन करना ॥

आगतास्तुयथान्यायंपूजितास्तुयथाविधि । कृत्वा कृपांमयिदेवायत्रासंस्तत्रगच्छत ॥ यजमानहितार्थायपुनरागमनायच । शत्रूणांबुद्धिनाशाय मित्राणामुदयायच ॥ यथाशस्त्रप्रहाराणां कवचंवारणंभ

वेत् । तद्वदेवाभिघातानांशांतिर्भवति वारणं ॥ अथ ग्रहादीनांविसर्जनम् ॥ यान्तुदेवगणाः सर्वेपूजामादायमामकीं । यजमानहितार्थायपुनरागमनायच ॥

ऋ० प्र० अष्टक अ० १ मं १ ॥

ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् । होतारं रत्नधातमम् ॥

भा०टी०–भलीभांति आये हुये और पूजन किये हुये मुझपर कृपा कर अपने२ स्थानको देवगण सिधारे यजमानकी कुशलताके लिये तथा फिर आवे लिये ॥ जैसे खड्गादि शस्त्रोंके प्रहारसे रक्षा कर्नेवाला कवच ( संजोया ) होता है तद्वत् संपूर्ण विघ्नोंके दूर करने लिये शांति है ॥ अग्निमीळे यह मंत्र ऋग्वेदके आदिका है ॥

ॐ विष्णुस्तत्सदद्यामुकगोत्रोहममुकशर्माहंइदंसमिष्टंघृतपक्कंविष्णुदैवतंभगवद्विष्णुप्रीतये यथानामगोत्राय ब्राह्मणायाहंददे । ॐअद्यकृतैतत्सामिष्टघृतपक्वदानप्रतिष्ठासांगतासिद्ध्यर्थंविष्णुप्रीतयेयथानामगोत्रब्राह्मणायदक्षिणांदातुमहमुत्सृजे।ॐअद्यतत्साद्विवाहांगत्वेनेदमिष्टघृतपक्वंविष्णुदैवतं कुलदेवताप्रीतयेसौभाग्यताप्राप्तयेयथानामगोत्राय ब्राह्मणायाहंददे। इतिकन्यापक्षे ॥ ततः सुपूजितंकंकणबंधनं ततस्तिलकंकुर्यात् । तदनंतरंसूर्यायार्घ्यंदानं ॥ इति श्रीकात्यायनीशान्तिःसमाप्ता ॥ शुभं भूयात॥

भा०टी०-अमुकगोत्रब्राह्मणको विष्णुप्रीतिलिये घृतपक्व अन्न देता हूं॥ और इसकी प्रतिष्ठाके लिये दक्षिणा देताहूं कन्यापक्षमें सौभाग्यतालिये यह पद कहना। फिर पूजन कर कंकण बंधना तिलक करना॥

इति श्रीकर्पूरस्थलनिवासिगौतमगोत्र ( शोरि ) अन्वयालंकृतश्रीअपारमहिमा.पं.घनैयारामंतत्पुत्रवैकुण्ठपीठाधिष्ठितश्रीतुलसीरामतत्पुत्रश्रीसकलजनवंद्यदैवज्ञदुनिचन्द्रतदात्मजशौर्य्यौदार्य्यधैर्य्याद्यालंकृतअधीतवेदवेदांगधर्मशास्त्रादिश्रीपंडितविष्णुदत्तवैदिककृतकात्यायनीशांतिटीका अद्रिवेदांकभूमिते १९४७ वैक्रमेमाधवेमासिकृष्णदशम्यां चंद्रवासरेसमाप्तिमगात् ॥ साचशुभावहास्यात् श्रीरामचंद्रप्रसादात् ॥

## अथ शांतिसामग्री।

मौली रोला पंचरंग आटा चावल गुड केशर पुष्पधूप दीप नैवेद्य तांबूल सुपारी ७ बतासे मठिया घुंगनिया दालां ७ घृत तैल कुशा स्रुव पलाश समिधा पटढी यव तिल गोमय बटना कंकण रेत पत्र ग्रहजप। इति॥

# चतुर्थप्रकरणम्।



ऑंस्वस्ति श्रीगणेशायनमः ॥ ओंवेदपुरुषायनमः ॥ श्रीः अथविवाहसामग्रीलिख्यते ॥ आटा गुड चावल मौली रोला केशर पुष्प नैवेद्य मेवा धूप दीप अट्टे ७ सुपारियां ११ दूर्वा चंदन पुष्पमाला २ आम्रके पत्र १००पटडीया २ वेद १ चंदोया १ खारे २ वाचौंकिया २ घृत प्रणीतापात्र प्रोक्षणीपात्र कांस्यपात्र २ मधुपर्क गौका दुग्ध दधी घृत शहत नालकेर १ धोती उपर्णा बालकनू । अर्धचौल अट्टे २ सिंधूर शूर्प १ लाजा अर्धशेर जंडीके पत्र शण शंख सुवर्ण वीडेपानके २ पूर्णपात्र १ चावल अभिषेककेलिये गागर वा कुंभ वाकौरी १ समिधा पलाश वा वेरीकी १० सेर वटना शिलाबट्टा शर्करा वहारी १ साल्हगिरा ५ पर्णा १ कुशा समवस्त्र गज ४ स्रुवा १ आसन २ अर्धा हलपजाली मठिया ५ इति॥अथ चतुर्थदिनमें चतुर्थीकर्मकी सामग्री लि०आटा गुड मौली चावल केसर धूप दीप नैवेद्य सुपारियां ५ दूर्वा आम्रपत्र १० पटडीया २ चंदोया १ घृत प्रणीता प्रोक्षणी अर्धचावल पृथूदकपात्र कुनाली १ हलपजाली गोदुग्ध अर्धसेर चावलपूर्णपात्र १ वस्त्रगज १० सिंदू डांगा ४ शण सुवर्ण रेत स्रुवा कुशा समिधा चरुस्थाली इति चतुर्थीकर्मसामग्री ॥

१ अथकन्योद्वाहेयजमानकर्तृकप्रतिज्ञासंकल्पःॐविष्णुर्विष्णुर्विष्णुः·अद्यब्रह्मणोद्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतिमेयुगे कलियुगेप्रथमचरणे अमुकसंवत्सरेऽमुकगोत्रेऽमुकायनेऽ

मुकपदेऽमुकमासेऽमुकतिथौनक्षत्रकरणयोगयुक्तेऽमु-
कवासरे अमुकगोत्रोत्पन्नोहं जन्मनामतःप्रसिद्धनाम-
तश्चामुकशर्माहं कृतकायिकमानसिकसांसर्गिकज्ञा
ताज्ञातसमस्तदोपपरिहारार्थं श्रुतिस्मृतिपुराणोक्त
फलावाप्तिकामःश्रीयज्ञपुरुपनारायणप्रीत्यर्थंतत्प्रसा-
दात्कायवाङ्मनोभिर्महापातकादिदोपनिवृत्तिपूर्वकै
हिकामुष्मिकेश्वरप्रसादानुरूपविभवयोगक्षेमप्राप्तयेच
अश्वमेधपुण्यजनकताकपुत्रीविवाहात्मकदानमहं क-
रिष्ये तन्निर्विघ्नतासिद्धये यथोपलब्धोपचारद्रव्यैः
गणपत्यादिनवग्रहपूजनमहंकरिष्ये ॥ इति ॥ पश्चा
त्गणेशादिपूजनं कुर्यात् ॥

२ अथ– यजमानकर्तृकशुभ्रचौलाधोतीपर्णानांदा
न संकल्पः ॥ अद्येत्यादि॰पुत्रीविवाहकर्म्मणि क-
न्यादानप्रतिपत्त्यर्थमादाविमानि चतुष्टयवस्त्राणि प-
ट्टकार्पासादिसंपादितानि मांजिष्ठारिष्टादिनानारं-
जितानि बृहस्पतिदैवतानि कन्यावरयोर्वैवाहिकस-
मये परिधानयोग्यानि सदक्षिणानि अमुकगोत्रप्र-
वरायाऽमुकनामशर्मणे विष्णुरूपिणेवरायतुभ्यमहं
संप्रददे ॥ इतिशुभ्रचौलादिदानम् ॥

३ अथ–कन्यापितृकर्तृकवेदीदानसंकल्पः ॥ ३ ॥
ॐतत्सदद्येति॰ नानारागानुरूपयज्ञाधिष्ठातृपरमे-
[illegible] प्रीत्यर्थं तत्प्रसादात्

याज्ञिकभूमिदानजन्यनानास्वर्गादिफलप्राप्तये इ-
मानि रजतमुद्रिकानि चंद्रदैवतानिसदक्षिणानिक-
न्यावैवाहिकचतुष्टयवंशानीमंतस्तंभवेदिकान्तरभू-
मिप्रतिनिध्यात्मकानियथानामगोत्राय० इतिवेदी
दानसंकल्पः ॥

४ अथ—यजमानकर्तृकचतुर्थीदानसंकल्पःॐअद्ये
त्यादि० कृतेतत्पुत्रीविवाहचतुर्थीकर्मप्रतिष्ठार्थसां
गतासिद्ध्यर्थंचेमांरजतमुद्रिकांसदक्षिणांचंद्रदैवतां
अमुकगोत्राय अमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रद
दे० स्वस्तीति प्रतिवचनं सर्वत्र०इतिचतुर्थीदानं॥
५ अथ—यजमानकर्तृकउपाध्यायदक्षिणासंकल्पः॥
ॐअद्येत्यादि०कृतैतदग्निष्टोमादिकृतसमपुत्रविवाह
योगमंत्रोच्चारणादिकर्तव्यताककर्म्मप्रतिष्ठार्थं सांग-
तासिद्ध्यर्थंचेदंद्रव्यंरजतंचंद्रदैवतं अमुकगोत्रायाऽ
मुकशर्म्मणे ब्राह्मणाय तुभ्यमहंसंप्रददे ॥ इति ॥
६ अथ—यजमानकर्तृककन्यायज्ञान्ते अन्नदानभू-
रिद्रव्यदानसंकल्पः ॥ ॐअद्येत्यादि० श्रीयज्ञपुरु-
षपरमेश्वरप्रीत्यर्थं तत्प्रसादादवगताऽनवगतसक-
लदुरितोपदुरितशमनपुरस्सराक्षयफलावाप्तयेच व-
रवध्वोः पूर्णायुरादिसुखसंपत्तिसिद्ध्ये प्रजापतिकं
दास्यमानान्नं तथाभूरिद्रव्यंताम्रंवारजतं सूर्यदैवतं
सदक्षिणं यथा२नाम गोत्रेभ्यो ब्राह्मणे

भ्यो विभज्यदातुमहमुत्सृजे ॥ इतिकन्यापितृकर्तृकनानाद्रव्यदानसंकल्पः ॥ शुभमस्तु ॥

७ अथ—बालककर्तृकविवाहप्रतिज्ञासंकल्पः ॐ तत्सदद्येति० जन्मलग्नतो वर्षलग्नतश्च तथा वैवाहिकलग्नतः खेटावेदतानिष्टफलनिरसनोत्तरेष्टफलप्राप्तिपुरस्सरसकलकर्मसिद्ध्यर्थं गार्हस्थ्यनानाकर्माधिष्ठानात्मकस्वविवाहकर्माहं करिष्ये ॥ तदंगत्वेनतन्निर्विघ्नतासिद्ध्यर्थंआदौगणपत्यादिनवग्रहपूजनमहंकरिष्ये ॥ १ ॥ इति ॥

८ अथ—पत्नीप्रतिग्रहगोदानसंकल्पः॥ ॐतत्सदद्येत्यादि०श्रौतस्मार्तवैदिकेतिहासपुराणोक्तफलावाप्तिकामःश्रीपरमेश्वरनारायणादिविशेषेणविशिष्टभगवत्प्रीत्यर्थं तत्प्रसादात् जन्मराशितोनामराशितश्च जन्मलग्नतोवर्षलग्नतश्च जन्यजननजनिष्यमाणात्मकदोषत्रयनिरसनोत्तरजन्मलग्नतो विवाहलग्नतश्चानिष्टखेटावेदिताशुभदुरितक्रमनिवृत्तयेपत्नीपाणिग्रहणजन्यप्रतिग्रहाविशेषताकपुरस्सरभार्यात्रिवर्गकरणमित्यनेनप्रतिपादितधर्मार्थकामप्राप्तयेचेमांगां सुवर्णरजतवस्त्रैः यथाशक्त्यलंकृतां कांस्यदोहोपयुक्तां सवत्सां मुक्तालांगूलभूषितां सुशीलां रुद्रदेवतां अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ ❀ अयद-

क्षिणासंकल्पः ॥ ॐ अद्यकृतैतद्गोदानप्रतिष्ठार्थं मिदंद्रव्यं रजतंवा सुवर्णं चंद्रदैवतंवाअग्निदैवतं यथा नामगोत्रायेत्यादि ॥

९अथ-गोदानाभावे दक्षिणादानसंकल्पः ॥ ॐअद्ये त्यादि सर्वं पूर्ववत्० इमांगांइत्यस्यंस्थाने गोदानप्र तिनिधिभूतमिदं द्रव्यं अमुकदैवतं यथानामगोत्राय ब्राह्मणाय तुभ्यमहं संप्रददे ॥ दक्षिणापूर्ववत् ॥

१० अथ-उपाध्यायदक्षिणादानसंकल्पः ॥ ॥ ॐअद्येत्यादि० गतानवगतसकलदुरितोपदुरितक्ष- यपुरस्सरसकलत्रस्वशरीरकल्याणोत्तरपूर्णायुरादि सुखसंपत्ति सिद्धिकामः कृतैतज्जन्मादिदशसंस्कारां तर्गतस्वविवाहात्मकमहत्संस्कारमंत्रोच्चारणकार यितव्यकर्तव्यताककर्म्मप्रतिष्ठार्थंच साङ्गतासिद्ध्य र्थम् इमाममुकद्रव्यमयीमुपाध्यायदक्षिणां अमुक दैवतां यथानामगोत्राय ब्राह्मणाय दक्षिणांदातुमहमु त्सृजे १ इति० ॥

११ अथ-विवाहे यजमानकर्तृकखड्वादानसंक ल्पः। तत्रकन्यापितासपत्नीकःकृतनित्यक्रियः कृमि जवस्त्रपरिधानपूर्वकोत्तराभिमुखः। आदौगोधूमचूर्णे नगणपत्यादीन्विधाय स्वस्तिवाचनपूर्वकं प्रतिज्ञा संकल्पंकुर्यात् ॥ ॐतत्सदद्येत्यादि देशकालपू

वैक० श्रुतिस्मृत्याद्युक्तफलावाप्तिपुरस्सरावगतान
गतसकलदुरितमहापातकक्षयानंतरज्ञाताज्ञातकृत
कायवाङ्मनःकृतसमस्तपातकोपपातकजन्मत्रयो
पार्जितपापक्षयकामः राजद्वारतोव्यवहारतश्चसुप्रति
ष्ठितैश्वर्यसुखावाप्तये च श्रीमद्भगवच्चरणारविंदप्रीति
जनककन्यादेहरोमसमसंख्याकल्पावच्छिन्नस्वर्गलो
कवासजनककन्योद्वाहांगभूतविचित्रवर्णवस्त्राद्याभर
णरीतिकांस्यलोहपैत्तलत्रपुसीसकमापपिष्टपकान्न
रजतसुवर्णरूप्याद्यनेकभूपणताम्राद्यनेकद्रव्ययु
क्तखट्वादानमहं करिष्ये ॥ ॥ ततः दक्षिणशिरसं
मुत्तरपादां तूलकोपधानादिपुरस्कृतां वस्त्राभरण
पात्राद्यलंकृतां खट्वां वरकन्यारोहणपूर्वकां पूर्व
दिक्पार्श्वेरक्तसूत्रोपबद्धां कन्यापितापत्न्यासह ग्रंथि
बंधनंकृत्वा खट्वातंतुगंधाक्षतपुष्पजलैः संकल्पं
कुर्यात् ॥ १२ अथ–ॐतत्सदद्येत्यादि देशकालौ
संकीर्त्य ० श्रुतिस्मृतिपुराणेतिहासेत्यादि प्रतिपा
दितफलावाप्तिकामोऽवगतानवगतसकलदुरितोपदु-
रितक्षयकामश्चनानापटतंतुसंख्यासमानानेककल्पा
वच्छिन्नवैकुंठलोकप्राप्तिकामः श्रीलक्ष्मीनारायणप्री
तिजनकबहुअश्वमेधयज्ञफलसूचकस्वपुत्रीविवाहाङ्ग
भूतां इमां सतूलोपधानादिसंस्कृतां खट्वां उत्ताना
मांगिरोदेवतां बृहस्पतिदेवताकामितरक्तपीताद्यनेक

विधसुवर्णरजततंतुमिश्रितवस्त्रसंयुतां विश्वकर्मदे वताकैः यथापरिमितैः रीतिकांस्यलोहमयपात्रैः सपात्रितां चंद्राग्निसामुद्रदैवताकअनेकविधविर चितरजतसुवर्णभूपणविभूपितां प्रजापतिदैवताक विविधपक्वान्नाद्याधिकरणकां सूर्य्यचंद्रदेवताकयथा परिमितताम्ररजतमयैः द्रव्यैस्सदक्षिणाममुकगो त्राय अमुकप्रवरायामुकनाम्ने वराय तुभ्यमहं सं-प्रददे॥ स्वस्तीति प्रतिवचनं वरप्रत्युक्तिर्वा ॥ दक्षि णायाभिन्नसंकल्पः । ॐअद्यकृतैतत्खट्वादानप्रति ष्ठार्थमिदं ताम्ररजतद्रव्यं सूर्यचंद्रदैवतं अमुक॰ ॥ आचारात् कन्यादातासकलत्रःजलेनवरकन्यासहि तखट्वांसव्येन वेष्टनंकुर्यात् ततःसपत्नीकोयजमानः खट्वापश्चिमभागेपूर्वाभिमुखः सन् कन्यावरक्षिप्तधा न्यानिगृहीगृह्णीयात्सबांधवैः॥ अथधान्यप्रक्षेपेमंत्रः ॥ ॐविश्वामित्रो जमदग्निर्वसिष्ठो गौतमस्तथा । कश्यपोत्रिर्भरद्वाजोविष्णुर्ब्रह्मादयश्चये । तेसर्वेत्त्वां प्रयच्छंतुधनधान्यादिसंपदम्॥ॐसनकःसनंदनाद्या श्चयेनवोमातरस्तथा । देवाःसर्वेप्रयच्छंतुधनंधान्यं सदागृहे २ ॐचिरंजीवतुमेमाता चिरंजीवतुमेपिता॥ चिरंजीवतुमेभ्राता चिरंजीवंतुबांधवाः ३ ॐ दि वारक्षतुसूर्योयं रात्रौरक्षतुचंद्रमाः । वंशंरक्षतुभौमश्च धनधान्यादिसंपदाम् ४ पितृवंशंगुधोरक्षेत् मातृ

वंशंगुरुस्तथा । वंधुवर्गंचरक्षेत्तुभृगुर्दैत्यपुरोहितः ५ अश्विन्यादीनिऋक्षाणि योगाविष्कंभकादयः। तिथयः प्रतिपद्याद्याः शुभंयच्छन्तुतेसदा६॥ ॐतेजोवृद्धिर्यशोवृद्धिर्वंशवृद्धिस्तथैवच । लोककीर्तिर्भवेत्तात धनधान्यंसदागृहे ॥ ७॥ ॐगंगाद्याः सरितः सर्वाः शोणाद्याश्चनदास्तथा । कृतंपापं प्रशाम्यंतु प्रयच्छन्तुसुखंचते ॥ ८॥ ततोयजमानः श्रीसूर्यायार्घ्यंदद्यात् ॥ इतिखट्वादानविधिः ॥

## (अथ गोत्रोच्चारणम्)

ॐ श्रीमत्पंकजविष्टरो हरिहरौ वायुर्महेन्द्रोनलश्चंद्रोभास्करवित्तपालवरुणाःप्रेताधिपाद्याग्रहाः ॥ प्रद्युम्नो नलकूवरौ सुरगजश्चिंतामणिः कौस्तुभः स्वामीशक्तिधरश्चलांगलधरः कुर्वन्तु वो मंगलम्॥ १ ॥ श्लोकान्तेगोत्रमुच्चारयेयुः ३ गौरीश्रीकुलदेवताचसुभगाभूमिः प्रपूर्णाशुभा सावित्रीचसरस्वती चसुरभिःसत्यव्रतारुंधती । स्वाहाजाम्बवती च रुक्मभगिनी दुःस्वप्नविध्वंसिनी वेलाचांबुनिधेःसमीनमकरा कुर्वंतुवो मङ्गलम् ॥ २ ॥ गंगासिंधुसरस्वतीच यमुनागोदावरीनर्मदा कावेरी सरयुर्महेंद्रतनया चर्मण्वती वेदिका ॥ क्षिप्रावेत्रवती महासुरनदी ख्याता च यागंडकी पुण्याःपुण्यजलैः समुद्रस-

हिताःकुर्वंतुवो मङ्गलम् ॥ ३ ॥ लक्ष्मीःकौस्तुभपारिजातकसुराधन्वंतरिश्चंद्रमाधेनुः कामदुघा सुरेश्वरगजो रंभाचदेवांगना ॥ अश्वःसप्तमुखो विषं हरिधनुः शंखोमृतं चांबुधेरत्नानीति चतुर्दश प्रतिदिनं कुर्वन्तुवो मङ्गलम् ॥ ४ ॥ ब्रह्मावेदपतिः शिवःपशुपतिःसूर्योग्रहाणांपतिःशक्रोदेवपतिर्हविर्हुतपतिःस्कंदश्वसेनापतिः । विष्णुर्यज्ञपतिर्बलीरधःपतिः शक्तिःपतीनांपतिः सर्वेतेपतयः सुमेरुसहिताःकुर्वन्तु वो मङ्गलम् ॥ ५ ॥ इति सर्वोपयोगिगोत्रोच्चारणं ॥ इति श्रीगौतमान्वयालंकृत ( शौरि ) दैवज्ञममार्य श्रीढुनिचंद्रसंगृहीतं संकल्पप्रकरणं समाप्तं शुभं भू०॥

अथ विवाहरामटीकायां । कन्यासंकल्प विधिः ॥ हरिःॐम् ॥ विष्णुर्विष्णुर्विष्णुःपुनातु अद्यतत्सद्ब्रह्म अथानन्तवीर्यस्य श्रीमदादिनारायणस्याऽचिंत्यापरिमिताऽनंतशक्तिसमन्वितस्य स्वकीयमूलप्रकृतिपरमशक्त्याप्रक्रीडमानस्य सच्चिदानन्दसन्दोहस्वरूपेस्वात्मनिसर्वाधिष्ठाने स्वाज्ञानकल्पितानां महाजलौघमध्ये परिभ्रम्यमाणानामनेककोटिब्रह्माण्डानामेकतमेऽस्मिन् ब्रह्मांडेऽव्यक्तमहदहङ्कारपृथिव्यप्तेजोवाय्वाकाशादिभिर्दशगुणोत्तरैरावरणैरावृते आधारशक्तिश्रीकूर्मवराहधर्मानन्ताष्टदिग्गजादिप्रतिष्ठिते . ऐरावतपुण्डरी

कवामनकुमुदाऽञ्जनपुष्पदन्तसार्वभौमसुप्रतीका
ख्याष्टदिग्दन्तिशुण्डादण्डोत्ताण्डितैतद्ब्रह्माण्डख-
ण्डयोरन्तर्गतभूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजन-
लोकतपोलोकसत्यलोकाख्यानांसर्वज्ञसर्व
शक्तिसमन्वितसर्वोत्तमसर्वाधिपश्रीचतुर्मुखप्रभृ
तिस्वस्वलोकाधिष्ठातृपुरुषाधिष्ठितानामधोभागे
फणिराजस्य शेषस्य सहस्रफणामण्डलैकफणोपरि
सर्षपैककणायमानमहीमण्डलान्तर्गतातलवितल
सुतलतलातलरसातलमहातलपातालानां स्वस्वा
धिष्ठात्रधिष्ठितानामुपरितने सुमेरुमंदरमन्दराचल
निषधहिमगिरिशृङ्गवद्धेमकूटदुर्द्धरपारियात्र
शैलमहाशैलमहेंद्रसह्याद्रिमलयाचलविंध्यर्ष्यमू
कचित्रकूटमैनाकमानसोत्तरत्रिकूटोदयाचला
स्ताचलपर्य्यन्तानेकाभिधानाद्रिगणप्रतिष्ठितायां
जम्बूप्लक्षशाल्मलीकुशक्रौञ्चशाकपुष्कराख्य
सप्तद्वीपवत्यां लवणेक्षुसुरासर्पिर्दधिक्षीरशुद्धोदका
ख्यसप्तसागरसमन्वितायां समस्तभूरेखायां कमल
कदम्बगोलकाकारायां वर्तमाने कुवलयकोशान्त
र्गतदलवद्विराजमाने उत्तरकुरुहिरण्मयरम्यकभ
द्राश्वकेतुमालेलावृतहरिवर्षकिम्पुरुषभारता
ख्यनवखण्डवति जम्बुद्वीपे सर्वेभ्योप्यतिरिक्तसा
ख्यातिदेशादिभिरप्यभीष्टसुकृतक्षेत्रभूतहेतुनाभिक्

पिततमे अङ्गवङ्गकलिङ्गकालिङ्गकाम्बोज-
सौवीर सौराष्ट्रमहाराष्ट्र बङ्गालोत्कलमगधमालव
नेपालकेरलचोरलगौडमलपाञ्चालसिंहलम
त्स्य द्रविड द्राविड कर्णाट राटव शूरसेन कोङ्कण
टोंकण पाण्ड्य पुलिंदान्ध्र द्रौण दशार्ण विदेह वि
दर्भ मैथिल कैकय कोशल कुन्तल मैन्ध्रुव जावल
सार्वसिन्धु शालभद्र मध्यदेश पर्वत काश्मीर
पुष्टाहार सिंधु पारसीक गान्धार वाल्हीक (हूण)
प्रभृतिबहुविधदेशविशेषसंपन्ने दण्डकारण्य महा
रण्याद्वैतारण्य कामुकारण्य सैन्धवारण्य प्रभृत्य
नेकारण्यवति श्रीगंगा यमुना सरस्वती गोदावरी
नन्दालकनन्दा मन्दाकिनी कौशिकी नर्मदा सरयू
कर्मनाशा चर्मण्वती क्षिप्रा वेत्रवती कावेरी फल्गु
मार्कण्डेय रामगंगा शतद्रु विपाशैरावती चन्द्रभा
गा वितस्ता सिन्धु द्दषद्वती प्रभृत्यनेकनदनदीवति
कुरुक्षेत्र हरिद्वार क्षेत्रमाल क्षेत्रादि बहुक्षेत्रान्विते
भारतखण्डे तत्रापि मध्यरेखाकुरुक्षेत्रादमुकदिग्भा
गेऽमुकनदीमध्ये श्रीश्वेतवाराहकल्पे वैवस्वतमन्व
न्तरेऽष्टाविंशेकलौयुगे कलिप्रथमचरणेआर्य्यावर्ते
पुण्यबृहस्पतिक्षेत्रे शुभसंवत्सरेऽस्मिन्नमुकायनगत
सूर्ये अमुकर्तावामुकमासेऽमुकपक्षेऽमुकतिथाव
मुकवासरे यथायोगकरणमुहूर्ते वर्तमाने चंद्रतारा

ऽनुकूलेपुण्येऽहनि अमुकगोत्रस्य अमुकसूत्रिणोऽमु
कशर्मणःप्रपौत्राय।१।अमुकगोत्रस्य यथोक्तप्रवरस्या
ऽमुकवेदिनोऽमुकशाखिनोऽमुकसूत्रिणोऽमुकशर्म्मणः
पौत्राय ॥२॥ अमुकगोत्रस्य यथोक्तप्रवरस्याऽमुक
वेदिनोऽमुकशाखिनोऽमुकसूत्रिणोऽमुकशर्म्मणः पु
त्राय ॥ ३ ॥ अमुकगोत्रस्य यथोक्तप्रवरस्याऽमुक
वेदिनोऽमुकशाखिनोऽमुकसूत्रिणोऽमुकशर्मणः प्रपौ
त्रीं १ अमुकगोत्रस्य यथोक्तप्रवरस्य अमुकवेदिनो
ऽमुकसूत्रिणोऽमुकशर्म्मणःपौत्रीं २ अमुकगोत्रस्या
मुकवेदिनोऽमुकशाखिनोऽमुकसूत्रिणोऽमुकशर्मणः
पुत्रीं ३ इत्येवं गोत्रप्रवरादिनिरूपणपूर्वकप्रपिता
महादिसंज्ञासंबंधकथनं त्रिरावर्त्य ३ अमुकगोत्राय
यथोक्तप्रवरायाऽमुकवेदिनेऽमुकशाखिनेऽमुकसूत्रिणे
अमुकशर्मणे ब्राह्मणाय वरायअमुकगोत्रांयथोक्तप्रव
रामुकनाम्नीमिमां कन्यां यथाशक्त्यलंकृतां महत
वस्त्रद्वयावृतांविवाहदीक्षितां प्रजापतिदैवतकां गङ्गा
वालुकाभिःसप्तर्षिमण्डलपर्यन्तराशीकृतरेणुपुञ्जस्य
मध्याद्वर्षसहस्रावसाने एकैकवालुकापकर्षणेन सर्व
वालुकापकर्षणसम्मितकालपर्यन्तं सूर्यलोकनिवा
ससिद्ध्यर्थं यवैश्चन्द्रमण्डलपर्यन्तं कृतएव राशि
तो वर्षसहस्रावसाने एकैकयवापकर्षणेन सर्वयवाप
कर्षणसम्मितकालपर्यन्तं चंद्रलोकनिवाससिद्ध्य

र्थं मापैर्ध्रुवमण्डलपर्यन्तराशीकृतमापेभ्यो वर्ष सहस्रावसाने एकैकमापापकर्पणसंमितकालं याव द्विष्णुलोकरुद्रलोकध्रुवलोकनिवाससिद्ध्यर्थं गन्धर्वाप्सरोगणमण्डितहंसपारावतशुकसारिका रुतनादित किङ्किणीशतसमलंकृत दिव्यविमानेन मनोऽभिलपित देशगमन पूर्वक गिरि नदी नद सिंधुद्वीपदिव्यदेश नन्दन चैत्ररथ प्रभृति स्थानेपु स्वाभिलपित भोग्यविपयोपभोगार्थं मया सह दशपूर्वेपां दशावरेपां मद्वंश्यानामग्निष्टोमातिरात्रवाजपेय पुण्डरीकाश्वमेध क्रतुशतफल जन्य ब्रह्मलोक निवासार्थं पत्नीत्वेन तुभ्यमहं संप्रददे ॥ इतिशंखावस्थित द्रव्ययुत जलेन सह कन्याहस्तं [ सांगुष्ठं ] वरहस्ते दद्यात् ॥ इतिनिवाहुरामटीकाधृतकन्या संकल्पविधानम् ॥ श्रीः ॥ ॥

अथ संस्कारभास्करोक्तः संक्षेपतः कन्यासंकल्पः ततो दाता स्वदक्षिणे पत्न्यासह वरदक्षिणपार्श्वे भागे शुभासने उदङ्मुख उपविश्य आचम्य प्राणानायम्य संवत्सरादि क्षेत्रादि देशकालौ संकीर्त्य एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ अस्मिन्पुण्याहे अस्याः कन्याया अनेनवरेण धर्मप्रजया उभयोः वंशयोर्वंशवृद्ध्यर्थं तथाच मम समस्तपितॄणां निरतिशयसानंद ब्रह्मलोकावाप्त्यादि कन्यादान

कल्पोक्त फलावाप्तये अनेम वरेण अस्यां कन्याया मुत्पादयिष्यमाणसंतत्या दशपूर्वान्दशावरान्मांच एकविंशतिपुरुषानुद्धर्तुं ब्राह्मविवाहविधिना श्रील क्ष्मीनारायणप्रीतये कन्यादानमहं करिष्ये इति ॥ अत्र सर्वसंकल्पादिषु शर्म इत्यस्यस्थाने क्षत्रिय वैश्यविवाहे वर्मन् गुप्तक्रमेण कथनम् ॥ यत्र अद्ये-त्यादि०दृश्यते तत्र पूर्वमुक्तं सर्वं योजनीयम्॥गोत्रो च्चारणं श्लोकान्ते संकल्पविहितं प्रपितामहपूर्विका वंशसंख्या कथनीया इति परिभाषा ॥ अनुक्तं श्लो-कतः सर्वं ज्ञातव्यम् ॥ श्रीः ॥

अथ त्रैवर्णिकानां पूजनार्थं शुक्लयजुर्वेदोक्तं सुस्वर साहितं नवग्रहमंत्रविधानं लिख्यते ॥

अथ सूर्यकाण्डिका ॥

आकृष्णेनरजंसावर्तमानोनिवेशयंन्नमृतु म्मर्त्यंञ्च ॥ हिरण्ययेनसवितारथेनादेवो यांतिभुवनानिपश्यन् ॥ १ ॥

अथ चंद्रमःकाण्डिका ॥

इमन्देवाअसपत्नꣳ सुवध्वम्महतेक्षत्राय महतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्य

अथषोडशोपचाराणिज्ञानमालायामुक्तानि॥ तद्यथा आवाहनम् १ आसनं२ पाद्यं ३ अर्घ्यं ४ आचमनीयम् ५ स्नानम् ६ वस्त्रम् ७ यज्ञोपवीतम् ८ गंधम् ९ पुष्पम् १० धूपम् ११ दीपम् १२ नैवेद्यं मध्येपानीयं उत्तरापोशनं हस्तप्रक्षालनं मुखप्रक्षालनं १३ ताम्बूलम् १४ दक्षिणा १५ नमस्कारम् १६॥ इति षोडशोपचाराणि एवं गणपत्यादीन्सर्वान्पूजयेत्॥ अभावेद्रव्यस्य यथाशक्त्योपलब्धवस्तुभिः पुष्पाक्षतादिभिःश्रद्धायुक्तः पूजयेत्॥

तवर्णमगधश्चात्रेयगोत्रोद्भवो वाणेशानदिशः सुहृ
च्छनिभृगुः शुत्रुःसदाशीतगुः । कन्यायुग्मपतिर्दशा
ष्टचतुरःषण्नेत्रगःशोभनो विष्णुः मौरुष देवते श
शिसुतः कुर्या० ॥ ४ ॥ जीवश्चाङ्गिरगोत्रजोत्तरमु
खो दीर्घोत्तरासंस्थितः पीताश्वत्थसमिच्च सिन्धु
जनितश्चापोऽथमीनाधिपः । सूर्येन्दुक्षितिजप्रियो
बुधसितौ शत्रू समाश्चापरे सप्ताङ्कद्विभवः शुभःसुरगु
रुः कुर्या० ॥ ५ ॥ शुक्रोभार्गवगोत्रजः सितनिभःप्रा
चीमुखः पूर्वदिक्पश्चाङ्गोवृषभस्तुलाधिपमहाराष्ट्रा
धिपोदुम्बरः । इन्द्राणीमघवानुभौबुधशनीमित्रार्क
चन्द्रौरिपूषष्ठोद्विर्दशवर्जितोभृगुसुतःकुर्या० ॥ ६ ॥म
न्दःकृष्णनिभस्तुपश्चिममुखःसौराष्ट्रकःकाश्यपःस्वा
मीमकरकुम्भयोर्बुधसितौमित्रेसमश्चाङ्गिराः ॥स्थानं
पश्चिमदिक्प्रजापतियमौदेवौधनुष्यासनःपट्त्रिस्थः
शुभकृच्छनीरविसुतःकुर्या० ॥ ७ ॥ राहुःसिंहलदे
शजश्चनिर्ऋतिःकृष्णाङ्गशूर्पासनोयःपैठीनसिसंम्भवः
श्चसमिधोदूर्वामुखोदक्षिणःयःसर्पाद्यधिदेवतेचानिर्ऋ
तिप्रत्याधिदेवःसदापट्त्रिस्थःशुभकृच्चसिंहिकसुतः
कुर्या० ॥ ८ ॥ केतुर्जैमिनिगोत्रजः कुशसमिद्वाय
व्यकोणेस्थितश्चित्राङ्गध्वजलाञ्छनोहिमगृहा योद
क्षिणाशामुखःब्रह्माचैवसचित्रचित्रसहितःप्रत्याधिदे
... नवग्रहपतिःकुर्यात्सदामंगल

न्द्रियाय ॥ इममुमुष्यपुत्रममुष्यै पुत्र मस्यैविशऽएषवोमीराजासोमोस्माकम्ब्रा ह्मणानार्थ्ठराजा ॥ २ ॥

अथ भौमकण्डिका ॥

अग्निर्म्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयम् । अपार्थ्ठरेतार्थ्ठसिजिन्वति ॥ ३ ॥

अथ बुधकण्डिका ॥

उद्बुद्ध्यस्वाग्नेप्प्रति जागृहित्वमिष्टापूर्ते सर्थ्ठसृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ ४ ॥

अथ बृहस्पतिकण्डिका ॥

बृहस्पतेऽअतियदर्य्यो ऽ अर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥ ५ ॥

अथ शुक्रकण्डिका ॥

अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः ॥ ऋतेनसत्यमिं

| संख्या मंत्र | पृष्ट | संख्या मंत्र | पृष्ट |
|---|---|---|---|
| ७४त्र्यायुपम् | १८५ | ९ त्वचात्वचमिति | २०१ |
| अथ चतुर्थीकर्ममंत्राः | | १० यत्तेसुशीमेइति | " |
| १ अग्नेप्रायश्चित्ते | १९५ | अथक्षेपकमंत्राणि | |
| २ वायोप्रायश्चित्ते | " | १ तत्त्वायामि। | |
| ३ सूर्यप्रायश्चित्ते | " | २ भवतन्नः। | |
| ४ चंद्रप्रायश्चित्ते | " | ३ इमंमेवरुण। | |
| ५ गंधर्वप्रायश्चित्ते | " | यहतीनमंत्रसूत्रकारने | |
| ६ प्राणैस्तेप्राणान् | २०१ | लिखेहैं | |
| ७ अस्थिभिरस्थीनि | " | पद्धतियोंमेंनहींहै ॥ | |
| ८ मांसैस्तेमांसम् | " | | |


इति विवाहमंत्राणांसूचीपत्रम्

# अथ अष्टमप्रकरणम्।

## (स्त्रीणामाचारे)

ॐस्वस्ति श्रीगणेशाय नमः ॥ श्रीगुरवेनमः॥

लोकानंत्यंदिवः प्राप्तिःपुत्रपौत्रप्रपौत्रकैः॥
यस्मात्तस्मात्स्त्रियःसेव्याःकर्तव्याश्चसुरक्षिताः॥

भा०टी०–याज्ञवल्क्यस्मृति और मन्वादि धर्मशास्त्र और श्रुतियोंमें स्त्रियोंका स्वीकार रक्षा यह सिद्धहै इस

लिये पुत्रपौत्र प्रपौत्रादिद्वारा स्वर्गादिप्राप्तिके लिये स्त्रियोंका पाणिग्रहण करना चाहिये और स्त्रियोंको उपदेश करना आचारका तथा भर्ताकी पूजन अवश्य कर्तव्यहै और यहभी याज्ञवल्क्यस्मृति प्रथम अध्यायमेंभी लिखाहै कि (पतिप्रियहितेयुक्तास्वाचाराविजितेन्द्रिया। सेहकीर्तिमवाप्नोतिप्रेत्यचानुत्तमांगतिम्) अर्थात् जो स्त्री पतिके प्रियमें तत्पर और शुद्ध आचार युक्त और इंद्रियजित ऐसी स्त्री इसलोकमें कीर्ति यश और परलोकमें उत्तमगतिको प्राप्त होतीहै और भी लिखाहै (स्त्रीभिर्भर्तृवचःकार्यमेषधर्मः परःस्त्रियाः) अर्थात् भर्ताका वचन मानना यही स्त्रीका परम धर्महै॥ अन्यच्च (गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः। पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः) अर्थात् ब्राह्मणोंका अग्नि गुरु, वर्णोंका ब्राह्मणगुरु, स्त्रीका एक पतिही गुरु होताहै अभ्यागत सर्वका गुरुहै इत्यादि अनेक प्रमाणोंसे स्त्रियोंका पतिही गुरुहै इसलिये पतिकी सेवा और आज्ञा कर्नी आचार शुद्ध रखना यही स्त्रीका मुख्य धर्महै इसलिये कुछ यत्किंचित् स्त्रियोंका आचार धर्म शास्त्रोक्त लिखते हैं॥ जो सौभाग्यवती स्त्रीमात्रहै उन्को प्रातःकाल सूर्योदयके प्रथम चार घडीके तडके(प्रातःकाल)उठकर नेत्रोंको प्रथम जल स्पर्श करना अनंतर अपने पतिके चरणोंपर सिरको धर प्रणाम कर प्रथम पतिके मुखका दर्शन करना पश्चात् शुद्ध (साफ) दर्पणमें अपना मुख देखना पीछेसे भूमिको प्रोक्षण (छिडकन) सम्मार्जन (वहारी) लेपनादिसे घरको शुद्ध करे और पृथिवीकी पूजा कर फिर शूद्रकमलाकरोक्त मंगलपाठ पढकर पतिकी सेवा पादप्रक्षालन आदिकर फिर वेणी (गूत) को कंकपत्र (कंगी) से शुद्धकर और पुष्पादिक धारण कर भाल (मस्तक) में तिलक लगाय हस्त कर्ण

बाहुके भूषणादि धारण कर फिर जिस प्रकार केशादिक जलसे क्लिन्न ( गिल्ले ) ना होवे तद्वत् स्नान करे इसमें प्रमाण-भी जैसे सौभाग्यकल्पद्रुममें लिखाहै ॥

यथा—बुद्ध्वाब्राह्ममुहूर्तेनिजपतिचरणौसंप्रणम्यास्य
मस्यप्रेक्ष्यप्रेम्णाथनैजंशुभमुकुरतलेभूमिमभ्यर्च्यपत्नी ।
प्रातःस्मृत्यादिकृत्वापतिपरिचरणंसंविधायैववेणीसं
रच्याधायभालेतिलकमथगलाधोनिमज्जेत्सभूपा ॥

और स्कांदमेंभी लिखाहै ( प्रसुप्तंच सुखासीनं रममाणं यदृच्छया ।आतुरेष्वपि कालेषु पतिंनोत्थापयेत्क्वचित् ) अर्थात् पति शयनअवस्थामें हो वा सुखपूर्वक आराममें होय।वा स्वेच्छापूर्वक आनंद लेताहो ॥ अर्थात् अपनी तखलीफमें भी होय तबभी पतिको ना उठावे ॥ और पतिको सर्व प्रकारसे प्रसन्न करें ॥ और हरिद्रा ( हलदी ) का मर्दन केशरका स्वीकार ।सदूर कज्जल कूर्पासक ( बहुदेवाकंगण ) ताम्बूल यह स्त्रियोंको मंगलदायक भूषणहै । और केशोंका संस्कार कर्णके भूषण तथा हस्तोंके भूषण भर्त्ताकी आयुकी वृद्धिकी इच्छावाली स्त्री इन्को मत त्यागे ॥

प्रमाणं । हरिद्राकुंकुमंचैवकस्तूरीकज्जलंतथा । कू
र्पासकंचतांबूलंमांगल्याभरणंस्त्रियाः ॥ केशसंस्का
रकबरीकरकर्णविभूषणम् । भर्तुरायुष्यमिच्छंतीदूर
येन्नकचित्सती ॥

और नियम काजल और पत्रपुष्प आदि जो आज्ञा करे पति वह आगे रखदे ॥ और भर्ताका उच्छिष्ट सेवन करे ॥

और तीर्थस्नानकी इच्छावाली स्त्री पतिका पादोदकपान करे और शंकर विष्णुसे अधिक स्त्रीको पति होताहै ॥

प्रमाणं।प्रसुप्तंचसुखासीनंरममाणंयदृच्छया।आतुरेष्वपिकालेषुपतिंनोत्थापयेत्क्वचित् ॥ हरिद्राकुंकुमंचैवसिंदूरंकज्जलंतथा । कूर्पासकंचताम्बूलंमाङ्गल्याभरणंस्त्रियः ॥ केशसंस्कारकबरीकरकर्णविभूषणम् । भर्तुरायुष्यमिच्छन्तीदूरयेन्नक्वचित्सती ॥ नियमोदकवह्निंचपत्रपुष्पादिकंचयत् । सेवेतभर्तुरुच्छिष्टमिष्टमन्नंफलादिकम् ॥ तीर्थस्नानार्थिनीनारीपतिपादोदकंपिबेत् । शंकरादपिविष्णोर्वापतिरेकोऽधिकःस्त्रियाः ॥

श्रीमद्भागवते ।

स्त्रीणांचपतिदेवानांतच्छुश्रूषानुकूलता ॥ तद्बन्धुष्वनुवृत्तिश्चनित्यंतद्व्रतधारणम् ॥ सम्मार्जनोपलेपाभ्यांसेकमण्डलवर्तने ॥ स्वयंचमण्डितानित्यंपरिमृष्टपरिच्छदा ॥ कामैरुच्चावचैःसाध्वीप्रश्रयेणदमेनच ॥ वाक्यैःसत्यैःप्रियैःप्रेम्णाकालेकालेचर्चयेत्पतिम् ॥ संतुष्टालोलुपादक्षाधर्मज्ञाप्रियसत्यवाक् ॥ अप्रमत्ताशुचिः स्निग्धापतितत्वपतिंतंभजेत् ॥ यापतिंहरिभावेनभजेच्छ्रीरिवतत्परा ॥हर्यात्मनाहरेर्लोकेपत्याश्रीरिवमोदते ॥ दुःशीलोदुर्भगोवृद्धोजडोरोग्यधनोपिवा । पतिःस्त्रीभिर्नहातव्योलोकेप्सुभिर

पातकी ॥ अस्वर्ग्यमयशस्यंचफल्गुकृच्छ्रंभयावहम् । जुगुप्सितंचसर्वत्रऔपपत्यंकुलस्त्रियाः ॥

भावार्थ–

स्त्रीलोगोंका पतिही परम देवहै इसकाही पूजन करना और आज्ञामें रहना और पतिके बंधु माता पिता इन्की सेवा करनी पतिव्रत धारण करना और पृथिवीकी शुद्धि संस्कार पूजन और अपने शरीरमें भूषण पुष्प धारण करने श्रेष्ठ कार्यों और वचनोंसे पतिव्रता स्त्री पतिकी सेवा करे और काल अर्थात् ऋतुकालमेंही पतिसे संभोग करे अन्यथा अतिविषयासक्त ना होवे । और सदैव संतुष्टरहै और सावधान पवित्र स्नेहवती रहै ॥ जो स्त्री हरिभावसे लक्ष्मीवत् पूजन कर्तीहै विष्णुलोकमें वह स्त्री पतिके साथ विष्णुजीवत् आनंद भोगतीहै ॥ यदि पति दुष्ट निर्द्धन वृद्ध मूर्ख जड रोगीभी होय वह लोकपरलोकमें सुख इच्छावती स्त्री न तिरस्कार करे ॥ और स्वर्गके ना देनेवाला यशके नाशकर्ने वाला संपूर्ण शास्त्र वेदोंमें निंदित उपपति अर्थात् जारस्त्रीको होताहै इसलिये स्त्रियोंको परपुरुषसे एकांत भाषण हास्य विहार अति निषिद्धहै । और इसमें याज्ञवल्क्यजीभी लिखते हैं ॥

पितृमातृश्वसृभ्रातृजामिसम्बंधमातुलैः ॥ हीनानस्याद्विनाभर्त्रा गर्हणीयान्यथा भवेत् । पतिप्रियहितेयुक्तास्वाचाराविजितेन्द्रिया ॥ सेहकीर्तिमवाप्नोतिमोदतेचोमयासह॥रक्षेत्कन्यांपिताविन्नांपतिःपुत्रास्तुवार्द्धकेअभावेज्ञातयस्तेषांनस्वातंत्र्यंक्वचित्स्त्रियाः॥

अर्थ-पिता माता बहन भ्राता बंधुओंकी स्त्री संबंधि मातुल इन्से रहित विना भर्त्ताके स्त्री ना होवे यदि होय तो विना भर्ताके निंदित होतीहै ॥

और जो स्त्री पतिके प्रियमें हित आचार शुद्ध विजित इंद्रिय सो इस लोकमें सुखको प्राप्त होतीहै मरनेबाद पार्वतीके लोकमें आनंद पार्वतीसे करतीहै ॥ और कन्याको पिता रक्षा करे विवाहीकी पति रक्षा करे वृद्धकी पुत्र रक्षा करे इन्के अभावमें ज्ञाति रक्षा करे अर्थात् स्वतंत्र स्त्री नाहो और वसिष्ठसंहितामें लिखाहै ॥

पितारक्षतिकौमारेभर्त्तारक्षतियौवने । पुत्राश्चस्थविरेभावेनस्त्रीस्वातंत्र्यमर्हति।असत्यंसाहसंमायामात्सर्यंचलचित्तता।निर्गुणत्वमशौचत्वंस्त्रीणांदोषाःस्वभावजाः॥अर्थात्-झूठबोलनासाहसमायाक्रोधचंचलता निर्गुणअपवित्ररहनायहस्त्रियोंकेस्वाभाविकदोषहैं ॥ अन्यच्च । पानंदुर्जनसंसर्गःपत्त्याचविरहोटनम् । स्वमश्चान्यगृहेवासोनारीणांदूषणानिषट् ॥

अर्थ-मद्यका पीना १ बुरी सोभत कुसंगत २ पतिसे वियोग कलह३भ्रमण देश स्थानोंमें४और के गृहमें शयन५ अन्य गृहमें वास ६ यह षट् दोषोंसे स्त्री दुष्ट हो जाती है कारण इसमें स्वतन्त्रता इस लिये स्त्रियोंको अपने वशमें रखना उचितहै और मांस का भक्षण स्त्रीको बडे रोगादि करनेवाला होनेसे वर्जनीयहै जैसे चिकित्सा शास्त्र भावप्रकाशमें लिखाहै ( आमिषस्याशनंयत्नात्ममदापरिवर्जयेत् ) अर्थ-मांसका भक्षण स्त्री अवश्य छोडदे ॥ और द्वार-

देशमें बैठना अर्थात् प्रतिदिन अपने द्वारपर बैठ और सर्व बातमें हास्य (हंसना) और गवाक्ष (झरोखे) से देखना बहुत प्रलाप (वृथा वाद करना) यह कुलस्त्रियोंके दोषहैं इसको व्यासजी लिखतेहैं ॥

द्वारोपवेशनंनित्यंगवाक्षेणनिरीक्षणम् ।
असत्प्रलापोहास्यंचदूषणंकुलयोषिताम् ॥

अन्यच्च

स्त्रीशूद्रोऽनुपनीतश्चवेदमंत्रान्विवर्जयेत् ॥अर्थ-स्त्रीशूद्रयहवेदमंत्रोंकोत्यागदे ॥ इससेपुराणश्रवणाध्ययनतुलसीपूजनहरितालिकाव्रतगौरीपूजनयहशूद्रकमलाकरसेदेखेअवश्यकर्तव्यहै ॥ औरभगवान्पराशरजी लिखतेहैंऋतुस्नातांतुयोभार्य्यांसन्निधौनोपगच्छति । घोरायांभ्रूणहत्यायांयुज्यतेनात्रसंशयः ॥ ऋतुस्नातातुयानारीभर्तारंनोपसर्पति । सामृतानरकं यातिविधवाचपुनःपुनः ॥

अर्थ–जो स्त्री ऋतुस्नानके अनन्तर अपने भर्तासे संभोग नहीं करती वह मरनेबाद नरकको प्राप्त होतीहै और वारंवार विधवा होतीहै इस प्रकार ऋतुकालमें स्वस्थ हो जो पुरुष स्त्रीको नहीं प्राप्त होता वहभी घोर जो भ्रूणहत्या अथवा गर्भहत्या उसको प्राप्त होताहै यदि रोगयुक्त हो तो ना जानेसे दोष नहीं होता अन्यथा प्रमादसे जो ना प्राप्त होवे वह पापका अधिकारी अवश्यहै इस लिये ऋतुकालमें स्त्रीको भर्तासे संभोग आवश्यकहै अन्यथा स्वेच्छासेहै ।

पराशरः ।

दरिद्रंव्याधितंधूर्तंभर्तारंयावमन्यते ।
साशुनीजायतेमृत्वासूकरीचपुनःपुनः ॥

अर्थ-जो स्त्री निर्धन वा रोगयुक्त वा मूर्ख भर्ता का प्रमादसे तिरस्कार करतीहै वह स्त्री मरकर शुनी (कुत्ती) सूकरीके वारंवार जन्मको प्राप्त होतीहै ॥ इसलिये भर्ताका अपमान स्त्री मात्रको कदाचित् ना करना चाहिये ॥

स्मृतिपाराशरः ।

पत्यौजीवतियानारीउपोष्यव्रतमाचरेत् ।
आयुष्यंहरतेपत्युःसानारीनरकंव्रजेत् ॥

अर्थ-जो सौभाग्यवती अर्थात् पतिवती स्त्री उपवास व्रत आचरण करतीहै वह पतिकी आयुको नष्ट कर मरकर नरकको प्राप्त होतीहै ॥

मनुः ।

अपृष्ट्वाचैवभर्तारंयानारीकुरुतेव्रतम् ।
सर्वंतद्राक्षसान्गच्छेदित्येवंमनुरब्रवीत् ॥

अर्थ-जो स्त्री भर्ताकी आज्ञा विना व्रत नियम दानादि करतीहै उसका फल राक्षसोंको मिलताहै ऐसे मनुजी कहते हैं इस स्मृतिमें मनुजीका आशय है ॥

पाराशरी ।

नष्टेमृतेप्रव्रजितेक्लीबेचपतितेऽपतौ ।
पंचस्वापत्सनारीणांपतिरन्योविधीयते ॥

अर्थ-नष्ट मृत संन्यस्त क्लीब पतित इन पंच आपतमें स्त्री को अन्य पति विधान कियाहै ॥ शंका है कि एक पतिके मरने पर द्वितीयपति उसके मरनेपै तृतीय चतुर्थ आदि असंख्य स्त्रीको पति कर्तव्य है क्योंकी पराशरजी स्वयं लिखतेहैं नष्टे मृते इत्यादि उत्तर यहहै कि पति शब्दका क्या अर्थहै यदि तुम कहो कि पति अर्थात् पाणिग्रहण जिससे करा हो तो हम कहते यहहै की ( पतौ ) यह रूप सिद्ध कैसे होताहै यदि कहै कि पतिशब्दकी विभक्तिमें (अच्चधेः) इस सूत्रसे घिसंज्ञकङिको ( औत् घिको अत् ) होकर पतौ सिद्ध भया तो हम कहते हैं कि ( पतिःसमास एवघिसंज्ञः ) अर्थात् पतिशब्दकी समासमेंही घि संज्ञा होतीहै तो इहां समास नही एकही शब्दहै॥और केवल पतिशब्दका सप्तमी विभक्तिमें (पत्यौ ) यह शब्द बनताहै ॥ इसलिये इहाँ असिद्ध असंस्कृत पति शब्दके प्रयोगसे भगवान् पराशर का यही आशयहै कि, असंस्कृत अर्थात् जिस्का पाणिग्रहण नाहो केवल वाङ्मात्र से पतिहो अर्थात् वाग्दान मात्र कियाहो उस पतिको नष्ट मृत संन्यस्त क्लीब होनेपर और पति स्त्रीको कर्तव्यहै ॥ और यह बात आचारसेभी सनातन सिद्धहै ॥ यदि आप यह शंका करे कि भगवान् पराशरजीने यह अशुद्ध ( पतौ ) प्रयोग लिखा क्यों वह हमारे तुमारे सदृश थे वह तो आचार्य धर्मशास्त्रके मुख्य हैं तो इस्का उत्तर देतेहैं कि यह जो आपको पूर्वोक्त कहाहैं सो उन्का आशय इस ( पतौ ) शब्दसेही मालुम होताहै। महाशय वह भगवान् पराशरजी तो ठीक २ लिखगये परंतु आपकी समझमेंही गडबड है। पराशरजीने अनञ् तत्पुरुष समासान्त पति शब्दकी संज्ञाकर ( अपतौ ) यह शब्द सिद्ध संस्कृत लिखाहै ॥ यथा न पतिः अपतिः तस्मिन् अपतौ पतिभिन्ने पतिसदृशे ईषत्पतावित्यर्थः ॥ तस्मिंश्च

नष्टे मृते सति स्त्रीणामन्यः पतिर्विधेय इति ॥ ऐसे पराशरजी अपने आशय को लिखते हैं यदि तुम कहो कि वहाँ तो क्लीबे च पतितेऽपतौ.ऐसा लिखाहै अपति तो लिखा नहीं उत्तर--महात्मन् यहां पररूप एङः पदान्तादति इस सूत्रसे (पतितेअपतौ) अकारका पररूप भयाहै ॥ और आगे द्वितीयश्लोकमें भी इस स्मृतिश्लोकके प्रगट कर्ते हैं ॥

मृतेभर्तरियानारीब्रह्मचर्यव्रतेस्थिता ॥
सामृतालभतेस्वर्गंयथातेब्रह्मचारिणः ॥

अर्थ–जो स्त्री पतिकी मृत्युपर ब्रह्मचर्य व्रतको धारण करतीहै वह मृत्यु होनेपर ब्रह्मचारीवत् स्वर्गको प्राप्त होती है इसलिये पतिशब्दसे असंस्कृत अर्थात् वाग्दान मात्र कहाहै ॥ तो उक्तदोष ना भया॥ नहीं तो पूर्वोक्त व्यर्थ होताहै ॥ और इस वाक्यकी दृढताकेलिये और भी प्रमाण देतेहैं॥

तिस्रःकोट्योर्धकोटीचयानिलोमानिमानवे ॥
तावत्कालंवसेत्स्वर्गंभर्तारंयानुगच्छति ॥
व्यालग्राहीयथाव्यालंबलादुद्धरतेबिलात् ॥
तद्वद्भर्तारमादायतेनैवसहमोदते ॥
पुरुषेणापिचोक्तायादृष्टावाक्रुद्धचक्षुषा ॥
सुप्रसन्नमुखीभर्तुःसानारीधर्मभाजनम् ॥
चितौपरिष्वज्यविचेतनंपतिं
प्रियाहियामुञ्चतिदेहमात्मनः ।
कृत्वापिपापंशतलक्षमप्यसौ
पतिंगृहीत्वासुरलोकमाप्नुयात् ॥

इत्यादि अनेक प्रमाण सतीविधानके व्यर्थ होते हैं और दरिद्रं व्याधितंधूर्त । ( पत्यौजीवति ) इत्यादि ( इमानारी-रविधवा ऋ०मंडल १० सू०८५) इत्यादि अनेक वेदमंत्रोंसे विधवाविवाह औ उपपतिस्वीकार ( जारसे मैत्री ) निषिद्ध हैं । यह मैंने विवाहका अंग समझकर साथ प्रमाणोंके स्पष्ट भाषामें सर्वोपकारके लिये स्त्रियोंका आचार दिङ्मात्र लिखाहै जिन महाशयोंको विशेष आकांक्षाहो वह मन्वादि धर्मशास्त्र ऋग्वेदादिमें अच्छीतरह देखले ॥ विस्तार भयसे बहुत नही लिखा ॥ इस्का प्रचार अवश्य धर्माभिलाषी पुरुषोंको उचितहै ॥ इतिश्रीकर्पूरस्थलनिवासिगौतमगोत्र ( शौरि ) अन्वयालंकृत दैवज्ञ ढुनिचन्द्रात्मज पण्डितविष्णुदत्तवैदिककृतःस्त्रीणामाचारःसमाप्तः ॥ शुभम् ॥ इत्यष्टमंप्रकरणसमाप्तम ॥

---

श्रीः ।

## अथ नवमंप्रकरणम् ।

( रजस्वलाकृत्यम् )

### अथ रजस्वलास्वरूपम् ।

भावप्रकाशे–द्वादशाद्वत्सरादूर्ध्वमापञ्चाशत्समाः स्त्रियाः । मासिमासिभगद्वारात्प्रकृत्यैवार्तवंस्रवेत् ॥ आर्तवस्रावदिवसादृतुःषोडशरात्रयः । गर्भग्रहणयोग्यस्तु सएवसमयःस्मृतः ॥

याज्ञवल्क्येनाप्युक्तम्।

षोडशर्तुनिशाःस्त्रीणांतास्मिन्युग्मासुसंविशेत् । ब्रह्म चार्येवपर्वण्याद्याश्चतस्रश्चवर्जयेत्।एवंगच्छन्स्त्रियंक्षा मांमघामूलंचवर्जयेत् ।सुस्थइन्दौसकृत्पुत्रंलक्षण्यंज नयेत्पुमान्॥ सर्वासामेवचतुर्वर्णस्त्रीणांसर्ववादिसम्म तःपूर्वोक्तःसमयः । ग्रंथांतरेतुविशेषः । तद्यथा।स्नान दिवसादूर्ध्वं द्वादशपरिमितरात्रावधिर्ब्राह्मण्याः ।दश रात्रावधिःक्षत्रियायाः। अष्टरात्रावधिर्वैश्यायाः। षड्रा त्रावधिशूद्रायागर्भधारणेशक्तिरिति ॥ रजस्वलास्व रूपमुक्त्वानियमानाहभावमिश्रप्रकाशे॥आर्तवस्राव दिवसादहिंसाब्रह्मचारिणी।शयीतदर्भशय्यायांपश्येद पिपतिंनच।करेशरावेपर्णेवाहविष्यंत्र्यहमाचरेत्। अ श्रुपातंनखच्छेदमभ्यंगमनुलेपनम्॥ नेत्रयोरञ्जनंस्ना नंदिवास्वापंप्रधावनम् ।अत्युच्चशब्दश्रवणंहसनंबहु भाषणम् ।आयासंभूमिखननंप्रवातञ्चविवर्जयेत् ॥ इममेवाशयंयथाहभगवान्धन्वन्तरिःसुश्रुते । (ऋतौ प्रथमदिवसात्प्रभृतिब्रह्मचारिणीदिवास्वप्नाश्रुपातस्ना नानुलेपनाभ्यङ्गालङ्कारमाल्यनखच्छेदनप्रधावनह सनकथनातिशब्दश्रवणावलेखनायासान्परिहरेत्। दर्भसंस्तरशायिनींकरतलशरावपर्णान्यतमशराव भाजनाहविष्याशनान्त्र्यहंचभर्तासंरक्षेदिति ॥ एता

न्नियमानुल्लंघ्ययावर्ततेताम्प्रतिदोपमाहभावप्रकाशे भावमिश्रः ॥ यथा–

अज्ञानाद्वाप्रमादाद्वालोभाद्वादैवतश्चवा ।साचेत्कुर्या न्निषिद्धानिगर्भोदोषाँस्तदाप्नुयात् ॥ एतस्यारोदना द्गर्भोभवेद्विकृतलोचनः । नखच्छेदेनकुनखीकुष्ठी त्वभ्यंगतोभवेत् ॥ अनुलेपात्तथास्नानाद्दुःशीलोऽ भ्यञ्जनादहक् ॥ स्वापशीलोदिवास्वापाच्चञ्चलः स्यात्प्रधावनात् ॥ अत्युच्चशब्दश्रवणाद्बधिरःखलुजा यते ।तालुदन्तोष्ठजिव्हासुश्यावोहसनतोभवेत् ॥प्रला पीभूरिकथनादुन्मत्तस्तुपरिश्रमात् ॥स्खलतेभूमिख ननादुन्मत्तोवातसेवनात् ॥अथचतुर्थदिवसानन्तरंवह तिरक्तेगच्छतःपुरुषस्यदोपमाहभगवाञ्छुश्रुतः ॥ किञ्चतत्रप्रथमदिवसेऋतुमत्यांमैथुनगमनमनायुष्यं पुंसांभवति। यश्चतत्राधीयतेगर्भःसोऽप्रसवमानोवि मुच्यतेप्राणैः ॥ द्वितीयेप्येवं ( सूतिकागृहेवा)तृतीये प्येवमसम्पूर्णाङ्गोऽल्पायुश्चभवति ॥ यथानद्यांप्रति स्रोतःद्रव्यंप्रक्षिप्तंप्रतिनिवर्ततेनोर्ध्वंगच्छातितद्वदेव द्रष्टव्यम् । तस्मान्नियमवर्तीत्रिरात्रंपरिहरेत् ॥ चतुर्थेतुसम्पूर्णाङ्गोदीर्घायुश्चभवति ॥ इममेवाशयं भावप्रकाशेभावमिश्रोपिभर्तृकृत्येविशिनष्टि दृष्टा न्तेन ॥ यथा–प्रवहत्सलिलेक्षिप्तंद्रव्यंगच्छत्यधोयं था ॥ तथावहतिरक्तेतुक्षिप्तंवीर्य्यमधोव्रजेत् ॥(अतः)

आयुःक्षयभयाद्भर्ताप्रथमेदिवसेस्त्रियम् । द्वितीयेपि
दिनेरत्यैत्यजेद्दतुमतींतथा ॥ तत्रयश्चाहितोगर्भोजा
यमानोनजीवति । आहितोयस्तृतीयेह्निस्वल्पायुर्वि
कलाङ्गकः ॥ अतश्चतुर्थीपष्ठीस्यादष्टमीदशमीत
था।द्वादशीवापियारात्रिस्तस्यांतांविधिनाभजेत्।वि
धिनाकोर्थोगर्भाधानोक्तविधानेन॥अत्रोत्तरोत्तरंरविद्या
दायुरारोग्यमेवच ।प्रजासौभाग्यमैश्वर्य्यंबलंचाभिग
मात्फलं ।धर्मशास्त्रेप्रथमरात्रिचतुष्टयगमनेनिषेधमा
हपाराशरः ॥ प्रथमेऽहनिचाण्डालीद्वितीयेब्रह्म
घातिनी । तृतीयेरजकीपुंसायथावर्ज्यातथाङ्गना ॥
व्याधिमतीचवर्ज्या ॥ तत्रस्त्रीणांव्याधयःप्रदरादय
स्तद्युक्तानिषिद्धा । तत्रापिविशेषाद्योनिरोगिणी
अशुद्धगर्भदोपमाविष्करोतिप्रकाशेभावमिश्रः ॥
दम्पत्योःकुष्ठबाहुल्याद्दुष्टशोणितशुक्रयोः । यदप
त्यंतयोर्जातंज्ञेयंतदपिकुष्ठितमिति ॥ गर्भाधानेऽ
योग्यंपुरुषंस्त्रियश्चाहसएव ॥ अत्याशितोऽधृतिःक्षु
द्धान्सव्यथाङ्गःपिपासितः।बालोवृद्धोऽन्यवेगार्तस्त्य
जेद्रोगीचमैथुनम् ॥ रजस्वलाव्याधिमतीविशेषा
द्योनिरोगिणी ॥ वयोधिकाचानिष्कामामलिनागर्भि
णीतथा ॥एतासांसङ्गमात्पुंसांवैगुण्यानिभवन्तिहि॥

युग्मरात्रीणांफलमाह ।

युग्मासुपुत्राजायन्तेस्त्रियोऽयुग्मासुरात्रिषु।।तत्रस्त्रीपु

रुपयोःसंभोगेयादृगुक्तस्तादृगुच्यते॥स्नातश्चंदनलिप्ताङ्गःसुगन्धिःसुमनोर्चितः। भुक्तवृष्यःसुवसनःसुवेपःसमलङ्कृतः।ताम्बूलवदनस्तस्यामनुरक्तोऽधिकस्मरःपुत्रार्थीपुरुपोनारीमुपेयाच्छयनेशुभे॥भार्य्यापि॥ पुरुपस्यगुणैर्युक्ताविहितन्यूनभोजना॥नारीऋतुमती पुंसासङ्गच्छेत्तुसुतार्थिनी॥ पूर्वंपश्येदृतुस्नातायादृशंनरमङ्गना॥तादृशंजनयेत्पुत्रमतःपश्येत्पतिंप्रियम्॥ प्रियमितिभर्त्तर्य्यासन्नेपुत्रादिकमपिपश्येत् ॥ अतः किंसिद्धम् ॥ पतिस्नेहदृष्ट्यातथापुत्रंपश्येत्असमीपेएपांभास्करंपश्येत् । एवंमंगलशब्दश्चाश्रौपीत् । मधुरान्नंभक्षयेत्॥भूपणवस्त्रादिकंसंधार्य्यरात्रौविहितन्यूनभोजनासुतार्थिनीस्त्रीसुमुहूर्तेसंगच्छेत् ॥ एतेनदिवसगमनंनिपिद्धंकर्मकाण्डचिकित्साशास्त्रे ॥ यथाचगृह्यसूत्रेभगवान्पारस्करः ॥ ( यदिदिवामैथुनंव्रजेत्क्लीबाऽल्पवीर्याअल्पायुपश्चप्रसूयन्तेतस्मादेतद्वर्जयेत्प्रजाकामोगृहीति ) भावप्रकाशचिकित्साशास्त्रेभावमिश्रोप्याह । आयुःक्षयभयाद्विद्वान्नाह्निसेवतकामिनीम् । अवश्योयदिसेवेततत्दाग्रीष्मवसन्तयोः। ग्रीष्मवसन्तयोरित्यत्रभोगार्थसेवतनतुसुतार्थम् अन्यथातस्मादेतद्वर्जयेत्प्रजाकामइतिव्यर्थस्यात् ॥ आवश्यकेभोगमपि ॥ गर्भाधानोक्तविधिनासङ्गच्छेदित्युक्तेगर्भाधानमुहूर्तमाहमुहूर्तचिंतामणौरामः ॥ यथा—

हस्तानिलाश्विमृगमैत्रवसुध्रुवाख्यैःशक्रान्वितैःशुभ
तिथौशुभवासरेच॥स्नायादथार्तववतीमृगपौष्णवायु
हस्ताश्विधातृभिरलंलभतेचगर्भम् ॥ यथाहस्तस्वा
तीअश्विनीमृगशिरअनुराधाउत्तरभाद्रपदारोहिणीज्ये
ष्ठाशुभतिथिरिक्तावर्जितशुभवारसौरारार्किविरहित
दिनेपुरजस्वलायाःस्नानंविधेयम् ॥ सुस्नातावस्त्रभू
षणसंयुतारात्रौमृगशिररेवतीस्वातिहस्तअश्विनीरो
हिणीएषुभेषुगमनात्स्त्रीगर्भंलभते ॥

( गमनेनिषेधमाहसएव )

गण्डान्तंत्रिविधंत्यजेन्निधनजन्मर्क्षंचमूलान्तकंदास्रं
पौष्णमथोपरागदिवसंपातंतथावैधृतिं। पित्रोःश्राद्ध
दिनंदिवाचपरिवाद्यर्द्धंस्वपत्नींगमे भान्युत्पातहता
निमृत्युभवनंजन्मर्क्षतःपापभम् ॥

तद्यथा

गण्डान्तंचतुर्घटिकात्मकंज्येष्ठाशतभिषारेवतीएषां
तथातिथिगण्डान्तंद्विघटिकात्मकंतथालग्नगण्डान्तं
नवांशार्द्धंघट्यात्मकं ॥ जन्मर्क्षंतअष्टमनक्षत्रंनिधन
संज्ञकंमूलांत्यमश्विनीरेवतीतथोपरागःसूर्यचन्द्रग्रह
णम् ।( उपरागोग्रहोराहुग्रस्तेत्विन्दौचपूष्णिच ) व्य
तीपातवैधृतियोगौपितुःश्राद्धदिनंतथादिनेपरिवार्द्धं
एतानिनक्षत्रयोगदिवसानिस्वस्त्रियं .संतानार्थं ग

च्छतापुरुषेणअवश्यंवर्जनीयानि ॥ ऋतुमतीस्त्री मनसापिमैथुनचिंतनंनकुर्यात् । उक्तञ्चबृहन्नारदीये॥ मैथुनंमानसंवापिवाचिकंदेवतार्चनम् । वर्जयेच्चनमस्कारंदेवतानांरजस्वलेति ॥

अथरजस्वलायाऋतुशुद्ध्यनंतरंपतिरेवद्रष्टव्यःअसमीपेपत्युःपुत्रमुखंद्रष्टव्यंवासूर्यदर्शनंविधेयंनान्यपुरुषंमनसावाचास्मरेत्चक्षुषानपश्येत् ॥ उक्तमिदं बृहन्नारदीये॥स्नात्वान्यंपुरुषंनारीनपश्येच्चरजस्वला। ईक्षेतभास्करंदेवंब्रह्मकूर्चंततःपिबेत् ॥ ब्रह्मकूर्चंपंचगव्यंस्नानानन्तरंशुद्ध्यर्थंपातव्यम् ॥

भाषामें रजस्वलास्त्रीका कर्तव्य लिखतेहैं–भावप्र०में लिखाहै कि, बारह वर्षके उपरंत५०वर्षतक स्त्रीके मास २ में भगद्वारा स्वभावसेही रुधिर ऋतु आतेहैं ॥ और ऋतुके प्रथम दिनसे ले १६ रात्रिपर्यंत गर्भ होनेके दिन होतेहैं ॥ इसलिये उन दिनोंमें पर्वणी ८ । १४ । ११ । १५ । अमावस यह तिथि और मघा मूलनक्षत्र छोड चंद्रअनुकूल हो तो गमन करें और रजस्वलास्त्री ३ तीन दिन पर्यंत यह नियम धारणकरे कि, हिंसा मतकरे ब्रह्मचारिणी हो पृथ्वीपर कुशा विछायकर शयन करे पतिको मत दर्शन करें ॥ हाथमें वा माटीके वर्तनमें डाल भात कोमल अन्न एकवार खाय तीनदिन नेत्रोंमें सुरमा स्नान दिनका शयन धावन बडा शब्दश्रवण करना हास्य बहुत बोलना कसरत पृथिवीका खो॰ वायुसेवन छोडदेवें ॥ अन्यथा जो स्त्री अज्ञानसे वा प्रमादसे वा लोभसे अथवा जीवके कर्मसे इन कामोंको करतीहै तो गर्भ दोषोंको प्राप्त होताहै ॥ अर्थात् जो स्त्री ऋ

तुकालमें रोदनकर्तीहै उसका गर्भ नेत्ररोगी होताहै ॥ यदि नख कटवावे तो गर्भस्थबालकके नख खराब हो जातेहैं ॥ यदि स्त्री अभ्यंग उवटना मर्दनादि करे तो बालकको कुष्ठ होजाताहै ॥ चंदनलेप स्नानादि करनेसे बालक सदैव रोगी सा होताहै अंजनकरनेसे नेत्रहीन अंध होजाताहै दिनके सोनेसे शयनशील होताहै और दौडनेसे चंचलहोताहै बडा ऊंचा शब्दश्रवण करनेसे बालक बाहिरा होताहै अतिहास्यसे तालुदांत ओष्ठमे काला होजाताहै बहुतभाषणसे बकवादी बालक होताहै ॥ कसरत और वायुके सेवनसे उन्मत्त ( पागल ) बालक होजाताहै ॥ माटी खोदनेसे जंघामें तागत नहीं होती लँगडा होताहैं ॥ इसलिये नियमं पालन करने चाहिये ॥

अन्यच्च—

ऋतुकालके तीनादिवसोंमें स्त्रीसे संभोगकरना आयुके नष्टकरनेवाला तेजहानिकारक अतिनिषिद्धहै उन्में यदि गर्भ कराजाय तो गिरजाताहै ॥ ऐसेही दूसरेदिन ( और प्रसूत स्थानमें ) तृतीयदिनमें हीनांग अल्पायु होताहै ॥ दृष्टांत जैसे वेगयुक्त नदीके प्रवाहमें फेंकी हुई वस्तु ऊपरको नहीं जाती अर्थात् नीचेकोही गिरजातीहै वैसे यहाभी समुझें इसलिये चतुर्थी ४ षष्ठी ६ अष्टमी ८ दशमी १० द्वादशी १२रात्रिमें स्त्रीको गर्भ होनेसे क्रमपूर्वक आयु ४ आरोग्य६ ऐश्वर्य ६ प्रजा ८ सौभाग्य १० बल १२ पूर्ण बालकमें होताहै ॥ और प्रथम दिन स्त्री चांडाली. दूसरे दिन ब्रह्महत्यारी तीसरे दिनमें रजकी वैश्या समान होतीहै इन दिनोंमें तथा व्याधियोनि रोगादियुक्त मलीन तथा गर्भिणी निष्काम स्त्रीसे भोग मत करे ॥ यदि स्त्री-पुरुषको कुष्ठ हो तो उन्के दुष्ट वीर्य ऋतुसे उत्पन्न गर्भभी समयमें

कुष्ठी होजाताहै ॥ इसलिये इन्को छोड़देवे ॥ और यह पुरुष मैथुन मतकरे, जो बहुत भोजन कर चुकाहै धैर्य्यरहित क्षुधायुक्त रोगी तृषा युक्त बालक १६ वर्षके नीचे वृद्ध ८० वर्षके ऊपर जो प्रथम किसी स्त्रीसे भोग कर चुका हो यह पुरुष मैथुन मत करे ॥ युग्मोंमें ४ । ६ । ८ । १० । १२ दिनोंमें भोगकरनेसे पुत्र होताहै अयुग्म । ५ । ७ । ९ । ११ । वें दिनमें भोग करनेसे कन्या होतीहै ॥ और वीर्य अधिकसे पुत्र ऋतु अधिकसे कन्या बराबर दोनोंके नपुंसक होताहै॥

## संभोगप्रकार ।

स्नानकर चंदन लगाय गंध धारण कर पुष्पमाला पहिन वृष्य अन्न दुग्ध घृतादि सेवनकर सुंदर वस्त्र भूषण धारण कर तांबूल भक्षणकर ऐसीही अपनी स्त्रीसे प्रीतिवाला अतिकामयुक्त पुरुष पुत्रकी इच्छाकेलिये शुभपर्यंकमें शयन करे नतु कामार्थ ॥ स्त्रीभी पूर्वोक्त गुणोंसे युक्त अल्प भोजन कर ऋतुसे शुद्ध हो उक्त दिनोंमें पुत्रकी इच्छाकर पुरुषके साथ भोग करे ॥ ऋतुस्नात स्त्री जैसे मनुष्यका दर्शन करे वैसीही संतान उत्पन्न करतीहै इसलिये पतिको वा पुत्रको देखे यदि वह समीप नहो तो सूर्यभगवान्का दर्शन करे

## संभोगनिषेध ।

आयुके क्षयके भयसे मनुष्य दिनको स्त्रीसे मत भोगकरे यदि वहाँ गर्भ होगा तो अल्पायुवाला कमताकत नपुंसक मूर्ख होगा इस लिये गृहस्थी लोग दिनको मैथुन मत करे ॥ कामार्थ मनुष्य अवशहुआ ग्रीष्म वसंतमें भोग करे यहभी गौण वाक्य है परंतु दिनमें भोग न करना यही मुख्य है ॥

## अथ गर्भाधानका मुहूर्त ।

हस्त स्वाती अश्विनी मृगशिर अनुराधा उत्तराभाद्रपदा रोहिणी ज्येष्ठा रिक्ता विना शुभतिथि शनि सूर्य मंगल विना वारको रजस्वला स्नानकर भूषणादियुक्त रात्रिमें मृगशिर रेवती स्वाती हस्त अश्विनी रोहिणी इन नक्षत्रोंमें संभोग करनेसे गर्भधारण करती है ॥

### ( निषिद्ध काल )

गंडकी ४ घटी अंतकी ज्येष्ठा शतभिषादि लग्नगंडांत जन्मनक्षत्रसे अष्टम नक्षत्र अष्टम राशि मूल अश्विनी रेवतीग्रहण व्यतीपात वैधृति पिताका श्राद्धदिन परिघका अर्धभाग यह पूर्वोक्त नक्षत्रादि संतानकी इच्छासे अपनी स्त्रीसे भोग करनेवाले मनुष्यको त्याज्य अवश्यहैं ॥ ऋतु कालमें स्त्री मनसेभी मैथुनकी इच्छा मत करे ॥ क्यों कि अन्यथा दुष्टसंतान होतीहै ॥ऋतुके अंतमें पंचगव्य पानकर संभोगादि विधि करें॥यह संक्षेपसे रजस्वला विधानलिखाहै। प्रार्थनेयं दैवज्ञदुनिचंद्रात्मज पं०विष्णुदत्तवैदिकशर्मणः ।

इति श्रीकपूरस्थलनिवासिगौतमगोत्र (शोरि )अन्वयालंकृतदैवज्ञदुनिचंद्रात्मजश्रीमच्छ्रीपण्डितविष्णुदत्तवैदिककृतंरजस्वलाकृत्यंसमाप्तम् ॥ शुभमस्तु श्रीरामचंद्रप्रसादात् ॥ समाप्तंचेदंनवमंप्रकरणम् ॥

## अथ प्रकीर्णाध्यायः प्रारभ्यते ।

अथविवाहेलग्नादिद्वादशस्थानेसूर्यादीनांफलमाह ॥ अथसूर्यस्य ॥ मृति १,विधनता २ धनं ३ सहजसं

क्षयः ४ पुत्रसूः ५ प्रियस्यपरमोन्नति ६ विंधवता७ चिरंजीविताम्८॥शुभाकृति९ रशीलता१०विविधल ब्धि११रर्थक्षयः १२ तनुप्रभृतिभास्करेसतिफलंभ वेद्योपिताम्॥१॥अथ चंद्रस्य॥प्राणस्यच्युति१रर्थसंप २ दुभयप्रीतिश्च ३ बंधून्नति ४ वैंपुत्र्यंच ५ सवैरता च ६ नियतंसापत्न्य ७ मात्मव्यथा ८ ॥ स्त्रीसूतिः ९ परकर्मकृत् १० स्वमधिका ११ लब्धिक्षयः१२ संपदां स्यादिंदावुदयात्सुखेतुकथितोबंधुक्षयः कै श्चन ॥ २ ॥ अथभौमस्यफ०॥ पंचत्वञ्च १ दरिद्रता २ सधनता३ सुभ्रातृवैरं ४ सुतानुत्पत्ति ५ र्दयितो न्नतिः ६ कुचरिता ७ सक्तिश्चरक्तस्रुतिः ८॥स्याद्भर्तृ प्रतिकूलता ९ऽऽमिपरुचि१०र्वित्ताप्ति ११ रर्थक्षयो १२नारीणामुदयादिवर्तिनिमहीपुत्रेविवाहोत्सवे ३॥ अथबुधस्यफलम्॥सौम्येभर्तृपरायणा१स्वगृहिणी२ स्यात्स्वामिपक्षार्चिता ३ बंधुत्वंच ४ सुतान्विताच ५ विगत ६ प्रद्वेषिपक्षातथा७॥ वंध्याच ८ स्वभिरु ज्झितातुकृतिनीमाया ९ विनीच क्रमात् १० भूरिद्र व्य ११ वती बहुव्यय १२ परालग्नादिभावस्थिते॥

अथ गुरुफलम् ॥

स्वाभीष्टा १ धनभागिनी २ प्रमुदिता ३ द्रव्यान्वि ता ४ स्वात्मजा ५ नद्यारि ६ र्दयितोज्झिता ७ च

विगतप्राणा ८ रताश्रेयसि९॥सिद्धार्था १० विभवा
न्विता ११ च विधना १२ भावेषु मूर्त्यादिषु–

अथ शुक्रफलम्॥

मनोभीष्टाभर्तुं १ धनचयपरा २ देवररता ३ कुले
ष्टा ४ सत्पुत्रा ५ विहितवहुवैरा ६ न्यनिरता ७॥
व्यसु ८ धर्मेष्टास्या ९ त्कुशलनिरता १० भूरिविभ
वा११निरर्था१२शुक्रेस्याद्भवतिखलुलग्नप्रभृतिषु॥

अथ शनिफलम्॥

स्यात्पुंश्चल्य १ धना २ ऽर्थवत्य ३ थयशोहीना ४
चहृद्रोगिणी ५ शत्रुघ्ना ६ निजगर्भपाटनरता ७
नीरुक्च ८ भग्नव्रता९॥दुःशीला१० वहुवित्तसंग्रह
परा ११ पानप्रसक्तांगना १२ स्याल्लग्नाद्रविनंदनेन
शिखिनास्वर्भानुनाचक्रमात्॥ शनिवत्राहुकेत्वो
रपि फलंज्ञेयम्॥
इति श्रीकर्पूरस्थलीयदैवज्ञदुनिचंद्रात्मज (शौरि)
पण्डितविष्णुदत्तवैदिकसंगृहीतंविवाहकुंडलीस्थि
तग्रहफलंसमाप्तम्॥ समाप्तश्चायंप्रकीर्णोध्यायः॥
शुभमस्तु श्रीरामचंद्रप्रसादात्॥

श्रीः ।

# अथार्कविवाहः ॥

प्रयोगरत्नेमात्स्ये ।

ॐस्वस्तिश्रीगणेशाय नमः ॥ तृतीयांमानुषींनैवच तुर्थीयःसमुद्वहेत् । पुत्रपौत्रादिसंपन्नःकुटुंबीसाग्निको वरः॥उद्वहेद्रतिसिद्ध्यर्थंतृतीयांनकदाचन ॥मोहाद ज्ञानतोवापि यदिगच्छेत्तुमानुषीम् ॥ नश्यत्येवनसं देहोगर्गस्य वचनंयथा ॥

तत्रैवसंग्रहे—

तृतीयांयदिचोद्वाहेत्तर्हिसाविधवाभवेत् ।चतुर्थ्यादिविवा हार्थंतृतीयेऽर्कसमुद्वहेत् ॥ आदित्यदिवसेवापिहस्तर्क्षेवा शनैश्चरे । शुभेदिनेवापूर्वाह्णेकुर्यादर्कविवाहकम् ॥

व्यासः—स्नात्वालंकृतवासास्तुरक्तगंधादिभूषितम् । सपु ष्पफलशाखैकमर्कगुल्मंसमाश्रयेत् ॥ सलक्षणेनसंयुक्तमर्कं संस्थाप्ययत्नतः।अर्ककन्याप्रदानार्थमाचार्यंकल्पयेत्पुरा ॥ अर्कसन्निधिमागत्यतत्रस्वस्त्यादिवाचयेत् । नांदीश्राद्धेहिर ण्येनअष्टवर्गान्प्रपूजयेत् । पूजयेन्मधुपर्केणवरंविप्रस्यहस्त तः । यज्ञोपवीतंवस्त्रंचहस्तकर्णादिभूषणम् । उष्णीषगंध माल्यादिवरायास्मैप्रदापयेत् । स्वशाखोक्तप्रकारेणमधुप र्कंसमाचरेत् ॥

आह्ने-ग्रामात्प्राच्यामुदीच्यांवाम्रपुष्पफलसंयुतं।परीक्ष्य यत्नतोधस्तात्स्थण्डिलादियथाविधि ॥ कुर्यादितिशेषः ॥ कृत्वार्कंपुरतस्तिष्ठन्प्रार्थयेतद्विजोत्तमः । त्रिलोकवासिन्स प्ताश्वछाययासहितोरवे ॥ तृतीयोद्वाहजंदोषंनिवारयसुखंकु रुतत्राध्यारोप्यदेवेशंछाययासाहितंरविम् ॥वस्त्रैर्माल्यैस्तथा गन्धैस्तन्मंत्रेणैवपूजयेत् । तत्रैवश्वेतवर्णेनतथाकार्पासतंतु भिः । गन्धपुष्पैःसमभ्यर्च्यअर्कलिंगैरभिषिच्यच ॥ गुडौदनं तुनैवेद्यंताम्बूलंचसमर्पयेत् ।

व्यासः—अर्कप्रदक्षिणीकुर्वञ्जपेन्मंत्रमिमंबुधः।ममप्रीतिक रायेयंमयासृष्टापुरातनी ॥ अर्कजाब्रह्मणासृष्टाअस्माकंप्रति रक्षतु ॥पुनःप्रदक्षिणीकुर्यान्मंत्रेणानेनधर्मवित् ।नमस्तेमंग लेदेवि नमःसवितुरात्मजे । त्राहिमांकृपयादेविपत्नीत्वंमेइ हागता । अर्कत्वंब्रह्मणासृष्टःसर्वप्राणिहितायच । वृक्षाणामा दिभूतस्त्वंदेवानांप्रीतिवर्द्धनः ॥ तृतीयोद्वाहजंपापंमृत्युंचा शुविनाशय । ततश्चकन्यावरणंत्रिपुरुषंकुलमुद्धरेत् ।आदि त्यः सविताचार्कपुत्रीपौत्रीचनप्त्रिका॥गोत्रंकाश्यप इत्युक्तं लोकेलौकिकमाचरेत् । सुमुहूर्तेनिरीक्षेतस्वस्तिसूक्तमुदीर यन् ।आशीर्भिःसहितैःकुर्यादाचार्यप्रमुखैर्द्विजैः ॥ अथाचा र्यसमाहूयविधिनातन्मुखाच्चताम् ।प्रतिगृह्यततोहोमंगृह्योक्त विधिनाचरेत् ।

---

आशीर्हितैत्यादिभिर्मंभि ॥

व्यासः-अर्ककन्यामिमांविप्रयथाशक्तिविभूषिताम्।गोत्राय शर्म्मणेतुभ्यंदत्तांविप्रसमाश्रय। अंजल्यक्षतकर्म्माणिकृत्वा कंकणपूर्वकम् ॥ यावत्पंचवृतासूत्रंतावदर्कप्रवेष्टयेत् । स्व शाखोक्तेनमंत्रेणगायत्र्यावाथवाजपेत् । पंचीकृत्यपुनःसू त्रंस्कंधेवध्नातिमंत्रतः ॥ बृहत्सामेतिमंत्रेणसूत्ररक्षांप्रकल्प येत्।अर्कस्यपुरतःपश्चाद्दक्षिणोत्तरतस्तथा।कुम्भांश्चनिक्षि पेत्पश्चादाग्नेयादिचतुष्टये। सवस्त्रंप्रतिकुम्भंचात्रिसूत्रेणैववे ष्टयेत् ॥ हरिद्रागन्धसंयुक्तंपूरयेच्छीतलंजलम् । प्रतिकुंभं महाविष्णुंसंपूज्यपरमेश्वरम् । पाद्यार्घादिनिवेद्यान्तंकुर्यान्ना म्नैवमंत्रवित् ॥

अत्रशौनकोक्तहोमप्रकारः ।

तृतीयेस्त्रीविवाहेतुसंप्राप्तेपुरुषस्यतु।आर्कविवाहंवक्ष्यामिशौ नकोहंविधानतः ॥ अर्कसन्निधिमागत्यतत्रस्वस्त्यादिवाच येत् । नान्दीश्राद्धंप्रकुर्वीतस्थंडिलंचप्रकल्पयेत् ॥ अर्कम भ्यर्च्यसौम्यांचगंधपुष्पाक्षतादिभिः ॥सौर्यासूर्यदेवत्यया ॥ आकृष्णेनेत्यनया । स्वयंचालंकृतस्तद्वद्वस्त्रमाल्यादिभिः शुभैः । अर्कस्योत्तरदेशेतुसमन्वारब्धएतया ॥ एतयार्क कन्यया । उल्लेखनादिकंकुर्यादाघारांतमतःपरम् । आ ज्याहुतिंचजुहुयात्संगोभिरनयैकया । यस्मैत्वाकामकामा येत्येतयर्चाततःपरम् । व्यस्ताभिश्चसमस्ताभिस्ततश्चस्वि ष्टकृद्भवेत् । परिषेचनपर्यंतमयाश्चेत्यादिकंक्रमात् ।प्रार्थना मंत्रादिविशेषमाहव्यासः ॥ पुनःप्रदक्षिणंकृत्वामंत्रमेतमुदी

रयेत् । मयाकृतमिदंकर्मस्थावरेपुजरायुणा । अर्कापत्या निनोदेहितत्सर्वंक्षंतुमर्हसि । इत्युक्त्वाशांतिसूक्तानिज स्वातंविसृजेत्पुनः ॥ गोयुग्मंदक्षिणांदद्यादाचार्यायचभक्तितः ॥ इतरेभ्योपिविप्रेभ्योदक्षिणांचापिशक्तितः । तत्सर्वंगुरवेदद्यादंतेपुण्याहमाचरेत् ॥

॥ अथप्रयोगविधिः ॥

तृतीयोद्वाहात्प्राग्दिनचतुष्टयाधिकव्यवहिते रविवारेशनिवारेहस्तनक्षत्रेशुभदिनांतरेवा ग्रामात्प्राच्यामुदीच्यांवापुष्पफलयुतार्काधस्तात्स्थण्डिलं कृत्वाऽर्कपश्चिमतउपविश्यमासपक्षाद्युल्लिख्यममतृतीयमानुपीविवाहजदोषापनुत्त्यर्थमर्कविवाहंकरिष्यइतिसंकल्प्य गणेशपूजास्वस्तिवाचन-मातृपूजनवृद्धिश्राद्धाचार्यवरणानिकुर्यात् । तत्रवृद्धिश्राद्धं सुवर्णेन ॥ अथाचार्येणपूजितोवरः ॥ त्रिलोकवासिन्सप्ताश्वच्छाययासहितोरवे । तृतीयोद्वाहजंदोषंनिवारयसुखंकुरु। इत्यर्कंसंप्रार्थ्याऽर्कं॥ आकृष्णेनेतिछाययासहितंरविमावाह्यश्वेतवस्त्रसूत्राभ्यामावेष्ट्य संपूज्यापोहिष्ठेत्यादिभिरभिषिच्यगुडौदनतांबूलादिसमर्प्य प्रदक्षिणीकुर्वन्ममप्रीतिकरायेयंमयासृष्टापुरातनी । अर्कजाब्रह्मणासृष्टाअस्माकंप्रतिरक्षतु इतिपठेत् ॥ द्वितीयप्रदक्षिणायांतु । नमस्तेमंगलेदेविनमःसवितुरात्मजे । त्राहिमांकृपयादेविपत्नीत्वंमेइहागता। अर्कत्वंब्रह्मणासृष्टःसर्वप्राणिहितायच । वृक्षाणामादिभूतस्त्वंदेवानांप्रीतिवर्द्धनः । तृतीयोद्वाहजंपापंमृत्युंचाशुविना

श्रयेति ॥ ततआचार्येणमासपक्षाद्युल्लिख्यकाश्यपगोत्रामादित्यपुत्रींसवितुः पौत्रीमर्कस्यप्रपौत्रीमिमामर्ककन्यामित्युक्तेवरःस्वस्तिनइंद्रोवृद्धश्रवाइतिसूक्तंपठन्नर्कंनिरीक्षेत । तत आचार्योविप्रैःसहाशिषोदत्वाऽमुकगोत्रामुकशर्म्मणे संप्रददे इत्यर्ककन्यांदत्वा ॥

अर्ककन्यामिमांविप्रयथाशक्तिविभूषिताम्।गोत्रायशर्म्मणे तुभ्यंदत्तांविप्रसमाश्रयेतिपठेत् ।वरस्तुयज्ञोमेकामःसमृद्ध्यतामितिप्रथमांधर्मोमेइतिद्वितीयां यशोमेतृतीयामितित्रीन क्षतांजलीनर्कोपरिक्षिप्त्वागायत्र्यापरित्वेत्यादिनावा पंचावृतासूत्रेणार्कमावेष्ट्यतत्सूत्रं पुनःपंचगुणंकृत्वार्कस्यस्कंधेवद्ध्वावृहत्सामेतिरक्षांपरिकल्प्यार्कस्यदिग्विदिक्ष्वष्टौकुंभान् संस्थाप्यवस्त्रेणत्रिसूत्रेणचावेष्ट्यहरिद्रागंधाद्यंतःक्षिप्त्वातेषु नाम्नामहाविष्णुमावाह्य षोडशोपचारैःसंपूज्यस्थंडिलेग्निंप्रतिष्ठाप्यआघारावाज्येनेत्यंतमुक्त्वात्रप्रधानं बृहस्पतिमग्निं वायुंसूर्यंप्रजापतिंचाज्येनशेषेणेत्याद्युक्त्वाघारांतेसंगोभिरांगिरसोवृहस्पतिस्त्रिष्टुप्॥ अर्कविवाहहोमेविनियोगः॥ॐसंगोभिराङ्गिरसोनक्षमाणोभगइवेदर्यमणंनिनाय।जनेमित्रोनदंपतीअनक्तिवृहस्पतेवाजयाशूँरिवाजौस्वाहा बृहस्पतयइदंनममेतित्यजेत् । यस्मैत्वाकामदेवोग्निस्त्रिष्टुप्विनियोगःप्राग्वत्

ॐयस्मैत्वाकामकामायवयंसम्राडचजामहे ॥तमस्मभ्यं कामंदत्वाथेदंत्वंघृतंपिबस्वाहा ॥ अग्नयइदं० ॥

ततोव्यस्तसमस्तव्याहृतिभिर्हुत्वास्विष्टकृदादिकर्मशे षंसमाप्यार्कंप्रदक्षिणीकृत्य ॥ मयाकृतमिदंकर्मस्थावरेणज रायुणा । अर्कापत्यानिनोदेहितत्सर्वंक्षन्तुमर्हसि ॥ इति प्रार्थ्याचार्य्यायगोयुग्ममन्येभ्यश्चविप्रेभ्योयथाशक्तिदक्षिणां दत्वाशांतिसूक्तंजस्वापूजोपस्करानाचार्यायदत्वादिनचतुष्ट यमग्निंकुंभांश्चरक्षेत् ॥ कुंभेपुमहाविष्णुंपूजयेच्च ॥

पंचमदिनकृत्यं ब्राह्मे—चतुर्थेदिवसेतीतेपूर्ववत्तांप्रपूज्य च ॥ विसृज्यहोममग्निंश्चविधिनामानुपींपराम्॥उद्वहेदन्यथा नैवपुत्रपौत्रसमृद्धिमान् ॥ इत्यर्कविवाहःसमाप्तः ॥

श्रीहरिःशरणम् ॥

---

अथ विवाहनिर्णयः ॥

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसंगृहीतवादार्थसा रांशमादायनिश्चयार्थंप्रमाणानिप्रदर्श्यंते ।

तद्यथा॥ईशंनत्वादर्श्यंतेऽत्रवेदादिशास्त्रमानतः॥एकस्य कामतोऽनेकसवर्णापाणिपीडनम् ॥ धर्म्मतत्वबुभुत्सूनांवो धनायैवमत्कृतिः । तेनैवकृतकृत्योऽस्मिनजिगीपास्तिलेश तः ॥ पाणिग्रहणिकामंत्रानियतंदारलक्षणम् । तेपांनिष्ठातु विज्ञेयाविद्वद्भिःसप्तमेपदे॥ मनुः—पाणिग्रहणसंस्कारःसवर्णा सूपदिश्यते।मनुः-विवाहमात्रंसंस्कारंशूद्रोपिलभतेसदेति ॥ [illegible]शिष्टे स्वपितृभ्यः पितादद्यात्सुतसंस्कारकर्म्म

णि ॥ पिण्डानोद्वहनात्तेपांतदभावेपितत्क्रमादिति ॥विवाहस्यसंस्कारत्वेसातितत्रविशेपोवक्ष्यते। वलादपहृताकन्यामन्त्रैर्यदिनसंस्कृता॥ अन्यस्मैविधिवद्देयायथाकन्यातथैवसेति पराशरभाष्यादिधृतकात्यायनवचनेनराक्षसादावपहरणमात्रेकन्यैव।

यथावा—अद्भिर्व्वाचाप्रदत्तायांम्रियेतोर्द्ध्वरोयदि॥नचमंत्रोपनीतातुकुमारीपितुरेवसेति॥

विवा०-उद्वाहतत्वधृतवसिष्ठवचनेनवाङ्मात्रदानेउदकपूर्वदानेवामंत्रसंस्काराभावेअन्यस्मैदेयेतिगम्यते॥

मंत्रसंस्कृतातुसा—शरीरार्द्धंस्मृताजायापुण्यापुण्यफलेसमेति॥ अस्थिभिरस्थीनिमांसैर्मांसानित्वचात्वचमित्यादिभिःशरीरार्द्धहराअर्द्धफलभाग्भवतीत्याशयः॥

पतिलक्षणंनिर्णयसिंधौ—यथा-नोदकेनचवाचाचकन्यायाःपतिरुच्यते। पाणिग्रहणसंस्कारात्पतित्वंसप्तमेपदेइति॥तथाचहारीतः—पाणिग्रहणेनजायात्वंकृत्स्नंहिजायापतित्वंसप्तमेपदेइति॥

अथकाभार्य्याकार्य्या—अत्रपैठीनसिः-भार्य्याःकार्य्याःसजातीयाःसर्वेपांश्रेयस्यःस्युरिति॥

केनविवाहेन—गंधर्वादिविवाहेपुशुभोवैवाहिकोविधिःकर्तव्यश्चात्रिभिर्वर्णैःसमर्थैश्चाग्निसाक्षिकः॥ अत्रत्रिभिरितिविशेपणाद्विप्रस्यात्रनाधिकारइतिविशेपः॥

कोविधिस्तेष्वित्यपेक्षायाम् ॥ गांधर्वासुरपैशाचाविवा
हाराक्षसश्चयः । पूर्वपरिश्रयस्तत्रपश्चाद्धोमोविधीयते ॥
सवर्णासु—पाणिग्रहणसंस्कारःसवर्णासूपदिश्यतइति·
· विप्रेणक्षत्रियादिपरिणयने—शरःक्षत्रिययाग्राह्यःप्रतोदो
वैश्यकन्यया॥ मनुः॥ तथाचयाज्ञवल्क्यः—पाणिर्ग्राह्यःसव
र्णासुगृह्णीयात्क्षत्रियाशरम्। वैश्याप्रतोदमादद्याद्वेदनेत्वग्रज
न्मनः॥ वस्तुतस्तु-स्वदारनिरतःसदेतिमानववचनस्यपरदा
रान्नगच्छेदितिपरिसंख्यापरतायाः सर्व्वैःस्वीकारेणपरदा
रगमननिषेधात्तद्व्युदासेनअनिषिद्धस्त्रीगमनं शास्त्रविहित
स्त्रीसंस्कारंविनानुपपन्नमितिसंस्कारआक्षिप्यते॥ सवर्णायां
संस्कृतायांस्वयमुत्पादयेत्तुयम्। औरसंतंविजानीयादिति॥
औरसोधर्मपत्नीजः। इति याज्ञवल्क्यस्मृतिः ॥
स्त्रीपरिणयनफलम्—अपत्यंधर्म्मकार्य्याणिशुश्रूषारतिरु
त्तमा। दाराधीनस्तथास्वर्गःपितृणामात्मनश्चह ॥ मनुः॥
लोकानंत्यंदिवःप्राप्तिःपुत्रपौत्रप्रपात्रकैः। यस्मात्तस्मात्स्त्रि
यःसेव्याःकर्तव्याश्चसुरक्षिताः॥ याज्ञ०स्मृ०पुन्नाम्नोनरका
द्यस्मात्पितरंत्रायतेसुतः ॥ तस्मात्पुत्रइतिप्रोक्तइत्यादि
पुत्रःपुरुत्रायतेनिपरणाद्वापुंनरकंततस्त्रायतइतिनिरुक्तम् ॥
पुत्रेणलोकाञ्जयतिपौत्रेणानंत्यमश्नुते इत्यादि ॥
कीदृशीस्त्रीस्यादित्याकांक्षायाम्—मनुः॥ असपिण्डाच
यामातुरसगोत्राचयापितुः। साप्रशस्ताद्विजातीनांदारक
र्म्मणिमैथुनेइति

तयाहिसहितःसर्वान्पुरुषार्थान्समश्नुते ॥ अनाश्रमीन तिष्ठेत्तुदिनमेकमपिद्विजः॥ आश्रमेणविनातिष्ठन्प्रायश्चित्ती यतेहिसः॥दक्षः ॥ नगृहंगृहमित्याहुर्गृहिणीगृहमुच्यते॥तया हिसहितःसर्वान्पुरुषार्थान्समश्नुते॥ द्वितीयमायुषोभागंकृ तदारोगृहंवसेदितिमनुः। अथनापुत्रस्यलोकोऽस्तीति॥नैमि त्तिकानिकाम्यानिनिपतन्तियथातथा ॥ तथातथैवकार्य्या णिनकालस्तुविधीयते ॥ अथप्रथमभार्यायांसत्यामन्याधि वेत्तव्यानवेतिआकांक्षायां मनुः॥वन्ध्याष्टमेधिवेत्तव्यादशमे स्त्रीमृतप्रजा ॥ एकादशेस्त्रीजननीइत्यादि ॥ स्त्रीप्रसूश्चाधिवे त्तव्यापुरुषद्वेषिणीतथाइतियाज्ञवल्क्यः ॥ अधिविन्नातुभ र्त्तव्यामहदेनोन्यथाभवेदित्युक्तेवंध्यादीनामपिभूषणवस्त्रादि भिर्भरणंनतुत्यागःपापभयात्। अधिविन्नातुयानारीनिर्गच्छे द्रोषिताग्रहात् ॥ सासद्यस्तुनिरोद्धव्यात्याज्यावाकुलसन्नि धौ ॥ एकामूढ्वातुकामार्थमन्यांवोढुंयइच्छति ॥ समर्थस्तो षयित्वार्थैःपूर्वोढामपरांवहेत् ॥ अप्रजांदशमेवर्षेस्त्रीप्रजांद्वा दशेत्यजेत् ॥ मृतप्रजांपंचदशेसद्यस्त्वप्रियवादिनीम् ॥

अन्यच्च––अथयदिगृहस्थोद्वेभार्य्येविन्देतकथंकुर्य्यादि तिबौधायनमाशंक्ययस्मिन्कालेविन्देतोभावग्नीपरिचरेदि त्युपक्रम्यद्वयोर्भार्य्ययोरन्वारब्धयोर्यजमानइति ॥

तथाचकात्यायनः––नैकयापिविनाकार्य्यमाधानंभार्य्य याद्विजैः। अकृतंतद्विजानीयात्सर्वाभिर्नारभेद्यदि ॥ एके कामेवासांसंनह्यादेकैकांगार्हपत्यमीक्षयेत्। एकैकामाज्यम

वक्षयेदिति ॥ यदेकस्मिन्यूपेद्वेरशनेपरिव्ययति ॥ तस्मादेकोद्वेभार्य्येविन्देतेति श्रुतिः ॥ श्रुतिस्मृतिपुराणानांविरोधेयत्रविद्यते ॥ तत्रश्रौतंप्रमाणंस्यात्तयोर्द्वैधेस्मृतिर्वरा॥व्यासः-विरोधेत्वनपेक्षंस्यादसतिह्यनुमानमितिजैमिनिसूत्रम् ॥

तथाचमहाभारते-एकस्यबह्व्योविहिता महिष्यःकुरुनन्दन। नैकस्याबहवःपुंसः श्रूयन्तेपतयः क्वचित्॥भार्य्याःकार्य्याःसजातीयाःसर्वेषांश्रेयस्यःस्युरित्यत्रापिबहुवचनम् ॥

तथाचकात्यायनः-अग्निहोत्रादिशुश्रूषांबहुभार्य्यःसवर्णया ॥ कारयेत्तद्बहुत्वेचज्येष्ठयागर्हितानचेत् ॥ सवर्णासुविधौधर्म्येज्येष्ठयानविनेतरेतियाज्ञवल्क्यः ॥

तथाचमहाभारते-ददौसदशधर्मायकश्यपायत्रयोदश। एकैवभार्य्यास्वीकार्य्याधर्म्मकर्म्मोपयोगिनी । प्रार्थनेचातिरागेचग्राह्यानेकापिचद्विज ॥ आद्यायांविद्यमानायांद्वितीयामुद्वहेद्यदि । तदावैवाहिकंकर्मकुर्यादावसथेऽग्निमान्॥नि०सिं० सदारोऽन्यान्पुनर्दारानुद्वोढुंकारणांतरात् । यदीच्छेदग्निमान्कश्चित्क्वहोमोस्यविधीयते ॥ स्वेग्नावेवभवेद्धोमोलौकिकेनकदाचन ॥ कात्यायनः ॥

मात्स्येयथा-उद्वहेद्रतिसिद्ध्यर्थंतृतीयांनकदाचन॥मोहादज्ञानतोवापियदिगच्छेत्तुमानुषीम् । नश्यत्येवनसंदेहोगर्गस्यवचनंयथेति ॥ तृतीयस्त्रीविवाहेतुसंप्राप्तेपुरुषस्यतु । आर्कविवाहंवक्ष्यामिशौनकोऽहंविधानतः॥ इत्युपक्रम्य । विसृ

ज्यहोम्यमग्निचविधिनामानुपींपराम् । उद्वहेदन्यथानैवपुत्र पौत्रादिवृद्धिमान् ॥ विसृज्याग्निकङ्कणञ्चमानुपीमुद्वहेत्परा म् । अनेनविधिनायस्तुकुर्यादर्कविवाहकम् ॥ पुत्रपौत्रादि संपत्तिश्चतुर्थ्यालभतेनरः । चतुर्थादिविवाहार्थंतृतीयेऽर्कसमु द्वहेत् । ऋणत्रयमपाकृत्यमनोमोक्षेनिवेशयेत् ॥ जायमा नोवैपुरुपस्त्रिभिर्ऋणैर्ऋणीभवतिब्रह्मचर्येणऋषिभ्यःयज्ञेनदे वेभ्यःप्रजयापितृभ्यइति ॥ एतदुक्तंभवति । दर्शितवहुप्रमा णैरेकपुरुपस्यवहुभार्य्याकरणंसिद्धम् ॥ एतद्विपये,किंस्वव र्णाउतब्राह्मणादिभिरसवर्णाःकार्य्याअत्रकोमुख्यःकल्पः क श्चगौणः ॥

अत्रोच्यते।यथाहमनुः—सवर्णाग्रेद्विजातीनांप्रशस्तादार कर्म्मणि । कामतस्तुप्रवृत्तानामिमाःस्युःक्रमशोवराः ॥ शू द्रैवभार्य्याशूद्रस्यसाचस्वाचविशःस्मृते । तेचस्वाचैवराज्ञ श्चताश्चस्वाचाग्रजन्मनः ॥

तथाहयाज्ञवल्क्यः-तिस्रोवर्णानुपूर्व्येणद्वेतथैकायथाक्रमम् ब्रह्मक्षत्रविशांभार्य्यास्वाचैवशूद्रजन्मनः ॥ भार्य्याःकार्य्याः स्वाजातीयाःसर्वेपांश्रेयस्यःस्युरिति मुख्यःकल्पस्तदनुचत स्रोब्राह्मणस्यतिस्रोराजन्यस्यद्वेवैश्यस्येति ॥ सवर्णासुसव र्णासुजायन्तेहिसजातयः । अनिन्द्येषुविवाहेपुपुत्राःसन्तानव र्द्धनाइतियाज्ञवल्क्यपैठीनसिमन्वादिवचनैःस्वजातीयविवा हेपुविशेपफलप्रतिपादनात्मुख्योऽयंकल्पःसर्वैरभिवंद्यः ॥ कामतस्तुप्रवृत्तानामिमाःस्युःक्रमशोवराः । यदिकामाद्रा

गाल्लोभात्क्रमशःप्रवर्तते तदोत्तमंपक्षमाश्रयेदितिनिष्कपः

याज्ञ० स्मृ० अथविवाहभेदानिरूप्यन्ते—ब्राह्मोविवाह आहूयदीयतेशक्त्यलंकृता । तज्जःपुनात्युभयतःपुरुषानेक विंशतिं॥ यज्ञस्थऋत्विजेचैवआदायार्षस्तुगोद्वयं।चतुर्दशप्र थमजःपुनात्युत्तरजश्चपट् ॥ इत्युक्त्वाचरतांधर्मंसहयादीय तेऽर्थिने । सकायःपावयेत्तज्जपट्पट्वंश्यान्सहात्मना ॥ आ सुरोद्रविणादानाद्गंधर्वःसमयान्मिथः ॥ राक्षसोयुद्धहरणा त्पैशाचःकन्यकाच्छलात् ॥ पाणिर्ग्राह्यःसवर्णासुगृह्णीयात्क्ष त्रियाशरम् । वैश्याप्रतोदमादद्याद्वेदनेत्वग्रजन्मनः ॥

अधिकारिणःकन्यादानस्य ॥ पितापितामहोभ्रातास कुल्योजननीतथा । कन्याप्रदःपूर्वनाशेप्रकृतिस्थःपरःपरः॥

अथकतिविधाःपुत्राः—औरसोधर्मपत्नीजस्तत्समः पुत्रि कासुतःक्षे० ज०।क्षेत्रजातस्तुसगोत्रेणेतरेणवा॥ गृहेप्रच्छन्न उत्पन्नोगूढजस्तुसुतःस्मृतः।दद्यान्मातापितावायंसपुत्रोदत्त कोभवेत् ॥ क्रीतश्चताभ्यांविक्रीतःकृत्रिमःस्यात्स्वयंकृतः । दत्तात्मातुस्वयंदत्तोगर्भेविन्नःसहोढजः ॥ उत्क्षिप्तोगृह्यतेय स्तुसोऽपविद्धोभवेत्सुतः।इत्याद्युपक्रम्यांते ॥ पिण्डदोंशहर श्चैषांपूर्वाभावेपरःपरः ॥ इत्यादिप्रमाणैःपुरुषस्यबहुस्त्रीत्वं सिद्ध्यते॥अत्राशंक्यतेयथाबहवःपुरुषस्यस्त्रियएवंस्त्रीणाम पिबहवःपुरुषाःस्युः ॥ अत्रकिंमानं येनपुरुषेणबहवःस्त्रियः कार्य्याः नतुस्त्रियाबहुपुरुषाइतिशङ्क्यमानंप्रत्याह ॥ श्रूयतांभोः ॥

तथाचश्रुतिः—यदेकस्मिन्यूपेद्वेरशनेपरिवयाति । त स्मादेकोद्वेभार्य्येविन्दते ॥ इतिश्रुतिःतस्मादेकोबह्वीर्विन्द तेइतिश्रुतिः ॥ तस्मादेकस्यबह्व्योजायाभवन्तिनैकस्यैबह वःसहपतयइतिश्रुतिः ॥

तथाचस्मृतिः । याज्ञवल्क्यः ॥ सकृत्प्रदीयतेकन्याहरं स्तांचोरदण्डभाक् ॥ मृतेजीवतिवापत्यौयानान्यमुपगच्छ ति॥सेहकीर्तिमवाप्नोतिमोदतेचोमयासह॥ इत्यादिश्रुतिस्मृ तिनिष्पन्नत्वात्पुरुपस्यैवबहवःस्त्रियोनतुस्त्रीणां बहुपुरुपाअ न्यथाव्यभिचारप्रसङ्गःस्यात् ॥

यथाहमनुः—आर्षंधर्म्मोपदेशंचवेदशास्त्राविरोधिना ॥य स्तर्केणानुसंधत्तेतद्धर्मवेदनेतरः । नतुस्वकपोलकल्पितयु क्तयः ॥ इतिश्रुतिस्मृतिपुराणनिष्पन्नोविवाहस्यसंक्षेपतोनि र्णयःकृतः । विस्तरस्तुतत्तद्ग्रंथेभ्योज्ञेयइति शम् ॥

इतिश्रीकर्पूरस्थलनिवासिगोतमगोत्र ( शोरि ) जात्या लंकृतदैवज्ञदुनिचन्द्रात्मज० पं०विष्णुदत्तवैदिककृतविवा हनिर्णयःसमाप्तः॥शुभमस्तु ॥

( विधवाविवाहखण्डनम् ॥ )

विदित होकी इस समयके आधुनिक पंडितमन्य स्वामी दयानंदानुयायि महामायि आई बताई एस्स आई पढनेसे शास्त्र वेदकी पंडिताई करनेवाले अनपढ यही रूदे चिल्लाते हैं कि देखो भाई इन विधवास्त्रियोंका फिर वि- वाह करना बहुत अच्छा वेदप्रतिपादित है ॥" इसमें प्रथम

यही कहना चाहिये कि यदि ठीक है तो आप अपने घर-मेंही क्यूं नहि करते अगर वेदमें लिखा है तो प्रमाण दो आर्य० उत्तर देताहै ओमायो डीयर (अन्यमिच्छस्वसुभगे पतिमत्) अर्थ हे मेरी स्त्री मेरे विना और पतिकी इच्छाकर ॥ सो यदि वेदको मानते हो तो ठीकहै ॥ उत्तर वाह जी वाह मंत्रकी एक टांग लोकोंको बहकाने वास्ते पकड छोडीहै प्रथम यह संपूर्ण मंत्र तो कह अर्थ करो तो तुम आपही जान लेगें आ०( यूवडवी ) यह मंत्र क्या औरभी है ॥ नाहि भाई तुमारे लिये इतनाही मंत्रहै ॥ वस आपके स्वामीका पोल गोलम मोल मालूम हो गया कि सपेद रीछोको नकेल मंत्रकी पाकर नचाते है ॥ अगर तुमको यथार्थ वेद आताहो तो कभी नये रास्ते नानिकालते यद्यपि ( उपदेशोहि मूर्खाणां प्रकोपाय न शांतये ) परंतु भूलेको रास्ते पाना लिखाहै सो आप सावधान हो मंत्र और अर्थ सुने ॥ अमेरे प्यारे मित्र केवल आप लोकोको अनजान होनेसे अपने पंथ (सहेकी तीन टांगवत्) चलानेके लिये स्वामीजीका जाल है । अन्यथा आजतक पीछे लोग पढेही नहिथे वा स्वामीजीने पंचम अन्यही वेद पढा सो देखिये॥

यह मंत्र ऋग्वेदं मं १० सू० १० । मं १० है ॥

आघाता गच्छानुत्तराणि युगानियत्र जामयःकारिष्यन्त्यजामि । उपवर्वृहि वृषभाय वाहुमन्यमिच्छस्व सुभगे पतिंमत् ॥ मंत्र १० इस्का निरुक्त पूर्वषट्क अध्याय ४ अनु० २० ॥ ओगमिष्यंति तान्युत्तराणि युगानियत्र जामयः करिष्यंत्यजामी कर्म्माणि जाम्मतिरेकनाम वालिशस्य वा समानजातीयस्य वोपजनं उपधेहि वृषभाय वाहुमन्यमिच्छस्वसुभगे पतिं मदिति व्याख्यातम् ॥

भाषार्थ–वह घोर कलियुग आवेगा जिस्मे भ्राता भगिनीयोंके साथ पापकर्म करेगे सो हे यमी भगनि मुझसे

अतिरिक्त अन्य जातिका बलिष्ठ पुरुषसे विवाहपूर्वक भोगकी इच्छा कर ॥ भावार्थ यह वेद मंत्रका है कि यमयमीका संवाद है उसमे यम भ्राता अपनेसे यमी भगिनी भोग करनेकी इच्छा रखतीथी तब यमने यह वाक्य कहा की मैं तुमारा भाई हूं सो बडा पाप है तुम अन्य जातिका वरकी इच्छाकर सो यह मंत्र तो भ्राताने भगिनी प्रति कहा है। नहि पति स्त्रीको कहता है कि तुम मेरे विना और पति करलो क्या वह नपुंसक वा वृद्ध हो आज्ञा कर्ता छः ॥

आर्य०क्यूंजी हमारेको स्वामीजीने और आज्ञा दीहै की स्त्री ग्यारह ११ पति करले ॥ वह मंत्र यह है ॥ ऋग्वेद मंडल १० सूक्त ८५ ॥ मंत्र

इमांत्वमिन्द्रमीढ्वःसंपुत्रांसुभगांकृणु ।
दशास्यांपुत्रानाधेहिपतिमेकादशंकृधि ॥

सो इसका अर्थ क्या है ॥ वाह जी वाह अरे भोले आर्य भ्राता तुम कुछ व्याकरण पढो तुमको अर्थके नामालुम होनेसे यह अंधकार है ॥ अर्थ श्रवण करो ॥

अन्वयः ॥ हे इंद्र इमांत्वम् ढ्वःसपुत्रांसुभगां कृणु । अस्यां दशपुत्रान् आधेहि पुत्रैःसहितम् एकादशं पतिंकृधि॥

भाषार्थ-हे इंद्र इसको तुम स्तुतियुक्त पुत्रयुक्त पति युक्त करो और इस्से दशपुत्र उत्पन्नहो दशपुत्रोंके साथ ग्यारहवा पतिभी वृद्धिको प्राप्तहो अर्थात् इसके पुत्र १० और पति जीवें तो यह पुत्रान् बहुवचन और पति एक वचन है ॥ सो विशेष सायणभाष्यसे मालूम करो ॥ और " नष्टे मृते प्रव्रजिते " इस स्मृतिका अर्थ स्त्रियोंके आचारमें लिखाहै वहांसे देखले ॥ और विवाहप्रकरणमे भी विशेष लिखाहै। विस्तारके भयसे नहि लिखा ॥ इति श्रीदैवज्ञढुनिचंद्रात्मज पं० विष्णुदत्तवैदिककृतसंक्षेपविधवाविवाहखण्डनम् ॥

अथ वधूप्रवेशप्रयोगः ॥

तत्र चतुर्थीकर्म्मानन्तरं पुत्रोत्साहविधानादिलौकिकाचारं यथासंप्रदायं कृत्वा वरः पित्रादत्तांवधूं गृहीत्वा महोत्स

युतः रथेवध्वाः दक्षिणंत उपविश्य मंगलवाद्यघोषपुरःसरं मंगलगीतपरैः पुरंध्रीजनैराचार्यादिविप्रैः आनोभद्राःस्वातिन इन्द्रोवृद्धश्रवा इतिस्वस्तिवाचनपुरःसरैश्चस्वगृहं गच्छेत् । ततोवधूपिता दासीहस्ते . दीपंदत्वा सहैवनयेत् ॥ पर्यंकादि यथाशक्ति यथारुचि पारिबर्हंच दद्यात् ॥ स्वगृहमागतेसपत्नीकेवरे वरमाता ओदनंबलिंगृहीत्वाइष्टयुत्तारणं कुर्यात् गृहद्वारसमीपेप्रथमंतंडुलपूर्णां कंचुकीं वधूहस्ते दद्यात् ॥ सातांगृहीत्वातत्रसततं तण्डुलानवकिरंतीद्वीपद्वययुक्तद्वारमंततोऽनेकदीपैर्विराजितगृहं . वधूः पादौ सुवर्णोपरिनिधाय वरेण सह प्रथमं दक्षिणपादपुरःसरंमंत्र वाद्यघोषैर्गृहंप्रविशेत ॥ ततः शृंगारिते महानसे वस्त्राच्छादिते पीठे वरः प्राङ्मुख उपविश्य दक्षिणतः वधूमुपवेश्य इत्यखिललोकाचारमात्रम् ॥ ततोवरः आचम्य प्राणानायम्य देशकालौ स्मृत्वा अस्याः मम नवोढाया भार्यायाः प्रथमागमने गृहप्रवेशांगतया विहितं मम सकलमनोरथ सिद्ध्यर्थं लक्ष्मीप्राप्त्यर्थं ज्येष्ठाख्यलक्ष्मीपूजनमहं करिष्ये ॥ महानसंपूजनं गणपतिपूजनं स्वस्तिपुण्याहवाचनंच करिष्ये ॥ ईति संकल्प्य ॥ ततो ज्येष्ठाख्यलक्ष्मीपूजनं महानसंपूजनं गणपतिपूजनं स्वस्तिपुण्याहवाचनंच विधिवत्कृत्वा ततः यथाचारप्राप्तं कांस्यपात्रे तण्डुलान्प्रसार्य तदुपरि सुवर्णशलाकया श्रीकुलदेवताप्रयुक्तमादौ अमुकीति नाम विलिख्य ॥ ॐमनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमंतनोत्वरिष्टं यज्ञं समिमंदधातु । विश्वेदेवास इहमादयंतामोंप्रतिष्ठ ॥ इति मंत्रेण प्रतिष्ठाप्य ॥ ॐश्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वेनक्षत्राणि रूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाण सर्वलोकंमऽइषाण ॥ इत्यनेन मंत्रेण षोडशोपचारैः संपूज्य ॥ अन्यद्यथाकुलाचारं कुर्यात् ॥ ततो वरेण नामवाचनपुरःसरं वध्वानाम प्रतिष्ठितं कुर्यात् ॥ श्रीकुलदेवताप्रयुक्तमादौ अमुकनाम प्रतिष्ठित मिति त्रिर्वाचयित्वा ब्राह्मणाः मनोजूतिरिति मंत्रंपठित्वा वधूशिरसि मं-

आक्षतान्दद्युः ब्राह्मणेभ्योगंधताम्बूलदक्षिणादिदत्त्वा तेराशीर्वचो गृह्णीयात् इति वधूप्रवेशः ॥ श्रीहरिर्विजयते ॥

वंशवर्णनम् ।

न्यायशास्त्रस्यकर्तायोह्यक्षपाद्गौतमोमुनिः ॥
महाप्रभावोराजर्षिर्मुनिमान्यअभूदिह ॥ १ ॥
तस्यरत्नविशुद्धेस्मिन्वंशेस्यादानुपूर्व्यतः ॥
महाप्रभावोविद्वांश्चकनैयालालविश्रुतः ॥ २ ॥
तत्पुत्रोविशुद्धात्माश्रीतुलसीरामनामतः ॥
अभूद्व्यापारविद्यायांकुशलोधर्मपरायणः ॥ ३ ॥
त्रिवर्गसाधयित्वायोगंगांसमनुगम्यच ॥
ध्यानयोगेनसंपश्यन्नीश्वरंव्यसृजत्तनूम् ॥ ४ ॥
तत्प्रभावाच्चतत्सूनुःसर्वशास्त्रविचक्षणः ॥
अनन्यकल्पोदैवज्ञोदुनिचंद्रइतिश्रुतः ॥ ५ ॥
तस्यात्मजेनविदुषाविष्णुदत्तेनशौरिणा ॥
वैदिकोपाह्वयुक्तेनकृतोयंग्रंथउत्तमः ॥ ६ ॥
नत्वाश्रीरामनाथंचशास्त्रिणंस्वगुरुंतथा ॥
श्रीमद्गोपालनामानमयोध्यावासिनंगुरुम् ॥ ७ ॥
श्रीहरिभक्तमहात्मानंशास्त्रिणंप्रणमाम्यहम् ॥
यमुनादत्तंचविद्वांसभायलाग्रामवासिनम् ॥ ८ ॥
मित्रंचसाधुरामश्चविष्णुदासस्तथैवच ॥
अन्यान्स्वाध्यायवर्गीयान्नमस्कृत्यपुनःपुनः ॥ ९ ॥
श्रीकर्पूरस्थलेरम्येअद्रिवेदांकभूमिते ॥
वैक्रमेमधुमासेचकृताटीकामनोरमा ॥ १० ॥
यदशुद्धमसंबद्धमज्ञानेनकृतंमया ॥
विद्वद्भिःक्षम्यतांसर्वमत्वामामल्पमेधसम् ॥ ११ ॥
विशेषेणार्थपुष्पाञ्जलिः ॥ श्रीः ॥